गइयाणं देवाणं एगं सागरोवम'मिति, अत्र देवानामेव ग्रहणं न तु देवीनां, उत्कृष्टतोऽपि तत्र तासां पञ्चाशत्पल्योपमस्थितिकत्वात्, तथा एकं सागरोपममिति मध्यमस्थित्यपेक्षया, उत्कर्षतस्तत्र सागरोपमद्वयसद्भावात्, प्रस्तटापेक्षया त्वेषा सप्तमे प्रस्तटे मध्यमावसेया। 'ईसाणे कप्पे देवाण'मित्यत्र देवग्रहणेन देवा देव्यश्च गृह्यन्ते, यतस्तत्र सातिरेकपल्योपमादन्या जघन्यतः स्थितिरेव नास्ति, 'ईसाणे कप्पे देवाणं अत्थेगइयाण'मित्यत्र देवानामेव ग्रहणं न देवीनां, तत्र तासामुत्कर्षतोऽपि पञ्चपञ्चाशत्पल्योपमस्थितिकत्वादिति, तथा ये देवाः सागरं-सागराभिधानमेवं सुसागरं सागरकान्तं भवं मनुं मानुषोत्तरं लोकहितमिह चकारो द्रष्टव्यः, समुच्चयस्य द्योतनीयत्वाद्, विमानं-देवनिवासविशेषमासाद्येति शेषः, देवत्वेन न तु देवीत्वेन तासां सागरोपमस्थितेरसम्भवात् उत्पन्ना-जातास्तेषां देवानामेकं सागरोपमं स्थितिः, एतानि च विमानानि सप्तमे प्रस्तटेऽवसेयानि ॥ स्थित्यनुसारेण च देवानामुच्छ्वासादयो भवन्तीति तान् दर्शयन्नाह—'ते ण'मित्यादि, येषां देवानामेकं सागरोपमं स्थितिस्ते देवा णमित्यलङ्कारे अर्द्धमासस्यान्ते इति शेषः आनन्ति प्राणन्ति, एतदेव क्रमेण व्याख्यानयन्नाह—उच्छ्वसन्ति निःश्वसन्ति, वाशब्दाः विकल्पार्थाः, तथा तेषामेव वर्षसहस्रस्यान्ते इति शेषः, आहारार्थः—आहारप्रयोजनमाहारपुद्गलानां ग्रहणमाभोगतो भवति, अनाभोगतस्तु प्रतिसमयमेव विग्रहादन्यत्र भवतीति, गाथेह—'जस्स जइ सागरोवमाइं ठिइ तस्स तत्तिएहिं पक्खेहिं । ऊसासो दे-

१ यस्य यावन्ति' सागरोपमाणि स्थितिस्तस्य तावद्भिः पक्षैः । उच्छ्वासो देवाना वर्षसहस्रैराहारः ॥ १ ॥

सेणं साहियाइं दो सागरोवमाइं ठिई पं० सणकुमारे कप्पे देवाणं जहण्णेणं दो सागरोवमाइं ठिई पं० माहिंदे कप्पे देवाणं जहण्णेणं साहियाइं दो सागरोवमाइं ठिई प० जे देवा सुभं सुभकंतं सुभवण्णं सुभगंधं सुभलेसं सुभफासं सोहम्मवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं दो सागरोवमाइं ठिई पं० ते णं देवा दोण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं दोहिं वाससहस्सेहिं आहारट्ठे समुप्पजइ । अत्थेगइया भवसिद्धिया जीवा जे दोहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रम् २ ॥

'दो दंडे'त्यादि सुगममाद्विस्थानकसमासेः, नवरमिह दण्डराशिवन्धनार्थं सूत्राणां त्रयं नक्षत्रार्थं चतुष्टयं स्थित्यर्थं त्रयोदशकमुच्छ्वासाद्यर्थं त्रयमिति, तत्रार्थेन—स्वपरोपकारलक्षणेन प्रयोजनेन दण्डो—हिंसा अर्थदण्डः एतद्विपरीतोऽनर्थदण्ड इति, तथा रत्नप्रभायां द्विपल्योपमा स्थितिश्चतुर्थप्रस्तटे मध्यमा, द्वितीयायां द्वे सागरोपमे स्थितिः पष्ठप्रस्तटे मध्यमा ज्ञेया, तथा असुरेन्द्रवर्जितभवनवासिनां द्वे देशोने पल्योपमे स्थितिरौदीच्यनागकुमारादीनाश्रित्यावसेया, यत आह—'दो देसूणुत्तरिल्लाणं'ति, तथा असङ्ख्येयवर्पायुपां पञ्चेन्द्रियतिरश्चां मनुष्याणां च हरिवर्परम्यकवर्षजन्मनां द्विपल्योपमा स्थितिरिति ॥ २ ॥ अथ त्रिस्थानकं—

तओ दंडा पं० तं०—मणदण्डे वयदंडे कायदंडे, तओ गुत्तीओ पं०, तंजहा—मणगुत्ती वयगुत्ती कायगुत्ती, तओ सल्ला पं० तं०—मायासल्ले णं नियाणसल्ले णं मिच्छादंसणसल्ले णं, तओ गारवा पं० तं०—इड्ढीगारवे णं रसगारवे णं सायागारवे णं, तओ विरा-

प्रभृतयः मन एव दण्डो मनोदण्डो मनसा वा दुष्प्रयुक्तेनात्मनो दण्डो–दण्डनं मनोदण्डः एवमितरावपि, तथा गोपनानि गुप्तयः–मनःप्रभृतीनामशुभप्रवृत्तिनिरोधनानि शुभप्रवृत्तिकरणानि चेति। तथा तोमरादिशल्यानीव शल्यानि दुःखदायकत्वात् मायादीनि, तत्र माया—निकृतिः सैव शल्यं मायाशल्यं 'ण'मित्यलङ्कारे एवमितरे अपि नवरं निदानं–देवादिऋद्धीनां दर्शनश्रवणाभ्यामितो ब्रह्मचर्यादेरनुष्ठानान्ममैता भूयासुरित्यध्यवसायो मिथ्यादर्शनम्—अतत्त्वार्थश्रद्धानमिति। तथा गौरवाणि—अभिमानलोभाभ्यामात्मनोऽशुभभावगुरुत्वानि तानि च संसारचक्रवालपरिभ्रमणहेतुकर्मनिदानानि, तत्र ऋद्ध्या—नरेन्द्रादिपूज्याचार्यत्वादिलक्षणया गौरवम्, ऋद्धिप्राप्त्यभिमानतदप्राप्तिप्रार्थनद्वारेणात्मनोऽशुभभावगौरवमित्यर्थः, एवं रसेन गौरवं रसगौरवं सातया गौरवं सातगौरवं चेति। तथा विराधनाः—खण्डनाः, तत्र ज्ञानस्य विराधना ज्ञानविराधना—ज्ञानप्रत्यनीकतानिह्नवादिरूपा एवमितरे अपि, नवरं दर्शनं—सम्यग्दर्शनं क्षायिकादि चारित्रं—सामायिकादीति। तथा असङ्ख्यातवर्षायुषां पञ्चेन्द्रियतिर्यग्मनुष्याणां देवकुरूत्तरकुरुजन्मनां त्रीणि पल्योपमानीति, तथा आभङ्करं प्रभङ्करं आभङ्करप्रभङ्करं चन्द्रं चन्द्रावर्त्तं चन्द्रप्रभं चन्द्रकान्तं चन्द्रवर्णं चन्द्रलेश्यं चन्द्रध्वजं चन्द्रशृङ्गं चन्द्रसृष्टं चन्द्रकूटं चन्द्रोत्तरावतंसकं विमानमित्यादि ॥ ३ ॥

चत्तारि कसाया प० तं०—कोहकसाए माणकसाए मायाकसाए लोभकसाए, चत्तारि झाणा प० तं०—अट्टज्झाणे रुद्दज्झाणे धम्मज्झाणे सुक्कज्झाणे, चत्तारि विगहाओ प० तं०—इत्थिकहा भत्तकहा रायकहा देसकहा, चत्तारि सण्णा प० तं०–आहार०

कथा विकथाः, तथा सञ्ज्ञाः—असातवेदनीयमोहनीयकर्मोदयसम्पाद्या आहाराभिलाषादिरूपाश्चेतनाविशेषाः, तथा सकषायत्वाज्जीवस्य कर्मणो योग्यानां पुद्गलानां बन्धनं-आदानं बन्धः, तत्र प्रकृतयः कर्मणोंऽशा भेदाः ज्ञानावरणीयादयोऽष्टौ तासां बन्धः प्रकृतिबन्धः तथा स्थितिः—तासामेवावस्थानं जघन्यादिभेदभिन्नं तस्या बन्धो-निर्वर्त्तनं स्थितिबन्धः तथा अनुभावो-विपाकस्तीव्रादिभेदो रसस्तस्य बन्धोऽनुभावबन्धः, तथा जीवप्रदेशेषु कर्मप्रदेशानामनन्तानन्तानां प्रतिप्रकृति प्रतिनियतपरिमाणानां बन्धः-सम्बन्धनं प्रदेशबन्ध इति, तथा कृष्टिसुकृष्टयादीनि द्वादश विमानानि पूर्वोक्तविमाननामानुसारवन्तीति ॥ ४ ॥

पंच किरिया प० तं०—काइया अहिगरणिया पाउसिआ पारितावणिआ पाणाइवायकिरिया, पंच महव्वया प० तं०—सव्वाओ पाणाइवायाओ वेरमणं सव्वाओ मुसावायाओ वेरमणं सव्वाओ अदत्तादाणाओ वेरमणं सव्वाओ मेहूणाओ वेरमणं सव्वाओ परिग्गहाओ वेरमणं, पंच कामगुणा प० तं०—सद्दा रूवा रसा गंधा फासा, पंच आसवदारा प० तं-मिच्छत्तं अविरई पमाया कसाया जोगा, पंच संवरदारा प० तं—सम्मत्तं विरई अप्पमत्तया अकसाया अजोगया, पंच निज्जरट्ठाणा प० तं०—पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं, पंच समिईओ प० तं०—ईरियासमिई भासासमिई एसणासमिई आयाणभंडमत्तनिक्खेवणासमिई उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमिई, पंच अत्थिकाया प० तं०-धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए पोग्गलत्थिकाए, रोहिणीनक्खत्ते पंचतारे प०,

कामगुणाः कामस्य वा—मदनस्योद्दीपका गुणाः कामगुणाः—शब्दादय इति, तथा आश्रवद्वाराणि—कर्मोपादानोपाया मिथ्यात्वादीनि संवरस्य—कर्मानुपादानस्य द्वाराणि—उपायाः संवरद्वाराणि—मिथ्यात्वाद्याश्रवद्वारविपरीतानि सम्यक्त्वादीनि, तथा निर्जरा—देशतः कर्मक्षपणा तस्याः स्थानानि—आश्रयाः कारणानीतियावन्निर्जरास्थानानि—प्राणातिपातविरमणादीनि, एतान्येव च सर्वशब्दविशेपितानि महाव्रतानि भवन्ति, तानि च पूर्वसूत्राभिहितानि स्थूलशब्दविशेपितानि अणुव्रतानि भवन्ति, निर्जरास्थानत्वं पुनरेपां साधारणमिति तदिहैपामभिहितं, तथा समितयः—सङ्गताः प्रवृत्तयः, तत्रेर्यासमितिः—गमने सम्यक् सत्त्वपरिहारतः प्रवृत्तिः भापासमितिः—निरवद्यवचनप्रवृत्तिः, एपणासमितिः—द्विचत्वारिंशद्दोपवर्जनेन भक्तादिग्रहणे प्रवृत्तिः, आदाने—ग्रहणे भाण्डमात्रयोरुपकरणपरिच्छदस्य निक्षेपणेऽवस्थापने समितिः—सुप्रत्युपेक्षितादिसाङ्गत्येन प्रवृत्तिश्चतुर्थी, तथोच्चारस्य—पुरीपस्य प्रश्रवणस्य—मूत्रस्य खेलस्य—निष्ठीवनस्य सिंघाणस्य—नासिकाश्लेष्मणो जल्लस्य—देहमलस्य परिष्ठापनायां—परित्यागे समितिः—स्थण्डिलादिदोपपरिहारतः प्रवृत्तिरिति पञ्चमी, अस्तिकायाः—प्रदेशराशयः धर्मास्तिकायादयो गतिस्थित्यवगाहोपयोगस्पर्शादिलक्षणाः, स्थितिसूत्रेपु स्थितेरुत्कृष्टादिविभाग एवमनुगन्तव्यः, यदुत—सागरमेगं १ तिय २ सत्त ३ दस य ४ सत्तरस ५ तह य बावीसा ६। तेत्तीसं जाव ठिई सत्तसुवि कमेण पुढवीसु ॥ १ ॥ जा पढमाए जेट्ठा सा बीयाए

१ सागरोपममेकं त्रीणि सप्त दश च सप्तदश तथा च द्वाविंशतिः । त्रयस्त्रिंशत् यावत् स्थितिः सप्तस्वपि क्रमेण पृथ्वीषु ॥१॥ या प्रथमाया ज्येष्ठा सा अग्रेतनायां

सणंकुमारमाहिंदेसु अत्थेगइयाणं देवाणं छ सागरोवमाइं ठिई प०, जे देवा सयंभुं सयंभूरमणं घोसं सुघोसं महाघोसं किट्टिघोसं वीरं सुवीरं वीरगतं वीरसेणियं वीरावत्तं वीरप्पभं वीरकंतं वीरवण्णं वीरलेसं वीरज्झयं विरसिंगं वीरसिट्ठं वीरकूडं वीरुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं छ सागरोवमाइं ठिई प०, ते णं देवा छण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं छहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे छहिं भवग्गहणेहिं सिज्झिस्संति जाव सव्वदुक्खाणमंतं करिस्सति ॥ सूत्रं ६ ॥

षट्स्थानकमथ, तच्च सुबोधं, नवरमिह लेश्या १ जीवनिकाय २ बाह्या ३ऽऽभ्यन्तरतपः ४ समुद्घाता ५ऽवग्रहार्थानि सूत्राणि षट्, नक्षत्रार्थे द्वे, स्थित्यर्थानि षट्, उच्छ्वासाद्यर्थं त्रयमेवेति, तत्र लेश्यानां स्वरूपमिदं—'कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥' इति, तथा बाह्यतपः—बाह्यशरीरस्य परिशोषणेन कर्मक्षपणहेतुत्वादिति, आभ्यन्तरं—चित्तनिरोधप्राधान्येन कर्मक्षपणहेतुत्वादिति, तथा छद्मस्थः—अकेवली तत्र भवा छाद्मस्थिकाः तत्र सम्—एकीभावेनोत्—प्राबल्येन च घातानि—निर्जरणानि समुद्घाताः, वेदनादिपरिणतो हि जीवो बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय निर्जरयति, आत्मप्रदेशैः संश्लिष्टान् शातयतीत्यर्थः, ते चेह वेदनादिभेदेन षडुक्ताः, तत्र वेदनासमुद्घातोऽसद्वेद्यकर्माश्रयः कषायसमुद्घातः कषायाख्यचारित्रमोहनीयकर्माश्रयः मारणान्तिकसमुद्घातोऽन्तर्मुहूर्तशेषायुष्ककर्माश्रयो वैकु-

सत्त नक्खत्ता पुव्वदारिआ प० [पाठा० अभियाइया सत्त नक्खत्ता], महाइआ सत्त नक्खत्ता दाहिणदारिआ प० अणुराहाइआ सत्त नक्खत्ता अवरदारिआ प० धणिट्ठाइआ सत्त नक्खत्ता उत्तरदारिआ प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं सत्त पलिओवमाइं ठिई प०, तच्चाए णं पुढवीए नेरइयाणं उक्कोसेणं सत्त सागरोवमाइं ठिई प०, चउत्थीए णं पुढवीए नेरइयाणं जहण्णेणं सत्त सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं सत्त पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं सत्त पलिओवमाइं ठिई प०, सणंकुमारे कप्पे अत्थेगइयाणं देवाणं उक्कोसेणं सत्त सागरोवमाइं ठिई प०, माहिंदे कप्पे देवाणं उक्कोसेणं साइरेगाइं सत्त सागरोवमाइं ठिई प०, बंभलोए कप्पे अत्थेगइयाणं देवाणं सत्त साहिया सागरोवमाइं ठिई प०, जे देवा समं समप्पभं महापभं पभासं भासुरं विमलं कंचणकूडं सणंकुमारवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं सत्त सागरोवमाइं ठिई ते णं देवा सत्तण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं सत्तहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे णं सत्तहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति जाव सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रम् ७ ॥

तच्च कण्ठ्यं, नवरमिह भयसमुद्घातमहावीरवर्पधरवर्पक्षीणमोहार्थानि च सूत्राणि षट् नक्षत्रार्थानि पञ्च स्थित्यर्थानि नव उच्छ्वासाद्यर्थानि त्रीण्येवेति, तत्रेहलोकभयं यत्सजातीयात् परलोकभयं यद्विजातीयात् आदानभयं यद् द्रव्यमाश्रित्य जायते अकस्माद्भयं बाह्यनिमित्तनिरपेक्षं स्वविकल्पाज्जातं शेषाणि प्रतीतानि, नवरमश्लोकः—अकीर्त्तिरिति, समुद्घाताः प्राग्वत्, नवरं केवलिसमुद्घातो वेदनीयनामगोत्राश्रय इति, तथा रत्निः—विततांगुलिर्हस्त

अत्थेगइयाणं नेरइयाणं अट्ठ पलिओवमाइं ठिई प०, चउत्थीए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठ सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं अट्ठ पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं अट्ठ पलिओवमाइं ठिई प०, बंभलोए कप्पे अत्थेगइयाणं देवाणं अट्ठ सागरोवमाइं ठिई प०, जे देवा अच्चिं १ अच्चिमालिं २ वइरोयणं ३ पभंकरं ४ चंदाभं ५ सूराभं ६ सुपइट्ठाभं ७ अग्गिच्चाभं ८ रिट्ठाभं ९ अरुणाभं १० अरुणुत्तरवडिंसगं ११ विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं अट्ठ सागरोवमाइं ठिई प० ते णं देवा अट्ठण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं अट्ठहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे अट्ठहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति जाव अंतं करिस्संति ॥ सूत्रम् ८ ॥

अथाष्टमस्थानकं व्याख्यायते, सुगमं चैतत्, नवरमिह मदस्थानप्रवचनमातृचैत्यवृक्षजम्बूशाल्मलीजगतीकेवलिसमुद्घातगणधरनक्षत्रार्थानि सूत्राणि नव स्थित्यर्थानि षट् उच्छ्वासाद्यर्थानि त्रीणीति, तत्र मदस्य—अभिमानस्य स्थानानि—आश्रयाः मदस्थानानि—जात्यादीनि, तान्येव मदप्रधानतया दर्शयन्नाह—'जाइमए'इत्यादि, जात्या मदो जातिमद एवमन्यान्यपि, अथवा मदस्य स्थानानि—भेदाः मदस्थानानि, तान्येवाह—'जाइमए' इत्यादि, शेषं तथैव, तथा प्रवचनस्य—द्वादशाङ्गस्य तदाधारस्य वा सङ्घस्य मातर इव—जनन्य इव प्रवचनमातरः—ईर्यासमित्यादयो, द्वादशाङ्गं हि ता आश्रित्य साक्षात्प्रसङ्गतो वा प्रवर्त्तते, भवति च यतो यत्प्रवर्त्तते तस्य तदाश्रित्य मातृकल्पनेति, सङ्घपक्षे

लोकश्रीटीकाकृतोक्तम्—"एतानि नक्षत्राण्युभययोगीनि चन्द्रस्योत्तरेण दक्षिणेन च युज्यन्ते, कदाचिच्चन्द्रेण भेदमप्युपयान्ती"ति, तथार्चिरादीन्येकादश विमाननामानीति ॥ ८ ॥

नव बंभचेरगुत्तीओ प० तं–नो इत्थीपसुपंडगसंसत्ताणि सिज्जासणाणि सेवित्ता भवइ १ नो इत्थीणं कहं कहित्ता भवइ २ नो इत्थीणं गणाइं सेवित्ता भवइ ३ नो इत्थीणं इंदियाणि मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता भवइ ४ नो पणीयरसभोई ५ नो पाणभोयणस्स अइमायाए आहारइत्ता ६ नो इत्थीणं पुव्वरयाइं पुव्वकीलिआइं समरइत्ता भवइ, नो सद्दाणुवाई नो रूवाणुवाई नो गन्धाणुवाई नो रसाणुवाई नो फासाणुवाई नो सिलोगाणुवाई ८ नो सायासोक्खपडिबद्धे याविभवइ ९ नव बंभचेरअगुत्तीओ प० तं०–इत्थीपसुपंडगसंसत्ताणं सिज्जासणाणं सेवणया जाव सायासुक्खपडिबद्धे याविभवइ, नव बंभचेरा प० तं०–सत्थपरिण्णा लोगविजओ सीओसणिज्ज सम्मत्तं। आवंति धुत विमोहा[यणं] उवहाणसुयं महपरिण्णा ॥१॥ पासे णं अरहा पुरिसादाणीए नव रयणीओ उद्धं उच्चत्तेणं होत्था, अभीजीनक्खत्ते साइरेगे नव मुहुत्ते चन्देणं सद्धिं जोगं जोएइ, अभीजियाइया नव नक्खत्ता चंदस्स उत्तरेणं जोगं जोएंति तं०—अभीजि सवणो जाव भरणी, इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ नव जोयणसए उद्धं आबाहाए उवरिल्ले ताराख्वे चारं चरइ, जंबूद्दीवे णं दीवे नवजोयणिआ मच्छा पविसिंसु वा ३, विजयस्स णं दारस्स एगमेगाए बाहाए नव नव भोमा प०, वाणमंतराणं देवाणं सभाओ सुहम्माओ नव जोयणाइं उद्धं उच्चत्तेणं प०, दंसणावरणिज्जस्स णं कम्मस्स नव उत्तरपगडीओ प० तं०—निद्दा पयला निद्दानिद्दा पयलापयला थीणद्धी चक्खुदंसणावरणे

उपासयिता भवतीति तृतीया ३ नो स्त्रीणामिन्द्रियाणि—नयननाशावंशादीनि मनोहराणि आक्षेपकरत्वात् मनोरमाणि रम्यतयाऽऽलोकयिता—द्रष्टा निध्याता—तदेकाग्रचित्ततया द्रष्टैव भवतीति चतुर्थी ४ नो प्रणीतरसभोजी—गलत्स्नेहरसविन्दुकस्य भोजनस्य भोजको भवतीति पञ्चमी ५ नो पानभोजनस्यातिमात्रम्—अतिप्रमाणं यथा भवत्येवमाहारकः सदा भवतीति षष्ठी ६ नो पूर्वरतं—पूर्वक्रीडितमनुस्मर्त्ता भवति रतं—मैथुनं क्रीडितं—स्त्रीभिः सह तदन्या क्रीडेति सप्तमी, ७ नो शब्दानुपाती नो रूपानुपाती नो गन्धानुपाती नो रसानुपाती नो स्पर्शानुपाती नो श्लोकानुपाती कामोद्दीपकान् शब्दादीनात्मनो वर्णवादं च नानुपतति—नानुसरतीत्यर्थः इत्यष्टमी ८ नो सातसौख्यप्रतिबद्धश्चापि भवति सातात्—सातवेदनीयादुदयप्राप्ताद्यत्सौख्यं तत्तथा, अनेन च प्रशमसुखस्य व्युदास इति नवमी ९, इदं च व्याख्यानं वाचनाद्वयानुसारेण कृतं, प्रत्येकवाचनयोरेवंविधसूत्रभावादिति, तथा कुशलानुष्ठानं ब्रह्मचर्यं तत्प्रतिपादकान्यध्ययनानि ब्रह्मचर्याणि तानि चाचाराङ्गप्रथमश्रुतस्कन्धप्रतिबद्धानीति, तथा अभिजिन्नक्षत्रं साधिकान्नव मुहूर्त्तांश्चन्द्रेण सार्द्धं योगं—सम्बन्धं योजयति—करोति, सातिरेकत्वं च तेषां चतुर्विंशत्या मुहूर्त्तस्य द्विषष्टिभागानां षट्षष्ट्या च द्विषष्टिभागस्य सप्तषष्टिभागानामिति, तथा अभिजिदादीनि नव नक्षत्राणि चन्द्रस्योत्तरेण योगं योजयन्ति, उत्तरस्यां दिशि स्थितानि दक्षिणाशास्थितचन्द्रेण सह योगमनुभवन्तीति भावः। 'बहुसमरमणिज्जाओ' इति अत्यन्तसमोबहुसमोऽत एव रमणीयो—रम्यस्तस्माद्भूमिभागान्न पर्वतापेक्षया नापि श्वभ्रापेक्षयेति भावः, रुचकापे-

९ केवलिमरणं वा मरिज्ञा सव्वदुक्खप्पहीणाए १०, मंदरे णं पव्वए मूले दस जोयणसहस्साइं विक्खंभेणं प०, अरिहा णं अरिट्ठनेमी दस धणूइं उद्धं उच्चत्तेणं होत्था, कण्हे णं वासुदेवे दस धणूइं उद्धं उच्चत्तेणं होत्था, रामे णं वलदेवे दस धणूइं उद्धं उच्चत्तेणं होत्था, दस नक्खत्ता नाणवुड्ढिकरा प० तं—मिगसिर अद्दा पुस्सो तिण्णि अ पुव्वा य मूलमस्सेसा। हत्थो चित्तो य तहा दस वुड्ढिकराइं नाणस्स ॥ १ ॥ अकम्मभूमियाणं मणुआणं दसविहा रुक्खा उवभोगत्ताए उवत्थिया प० तं०—मत्तंगया य भिंगा[2] तुडिअंगा[3] दीवजोई[4] चित्तंगा[5] चित्तरसा[6] मणिअंगा[7] गेहागारा[8] अनिगिणा[9] य ॥ १ ॥ इमीसे णं रयप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइआणं नेरइयाणं दस पलिओवमाइं ठिई प०, चउत्थीए पुढवीए दस निरयावाससयसहस्साइ प०, चउत्थीए पुढवीए अत्थेगइयाणं उक्कोसेणं दस सागरोवमाइं ठिई पं०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं जहण्णेणं दस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०, असुरिंदवज्ञाणं भोमिज्ञाणं देवाणं अत्थेगइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं दस पलिओवमाइं ठिई प०, वायरवणस्सइकाइए णं उक्कोसेणं दस वाससहस्साइं ठिई प०, वाणमंतराणं देवाणं अत्थेगइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं दस पलिओवमाइं ठिई प०, वंभलोए कप्पे देवाणं उक्कोसेणं दस सागरोवमाइं ठिई प०, लंतए कप्पे देवाणं अत्थेगइयाणं जहण्णेणं दस सागरोवमाइं ठिई प०, जे देवा घोसं सुघोसं महाघोसं नंदिघोसं सुसरं मणोरमं रम्मं रम्मगं रमणिज्जं मंगलावत्तं बंभलोगवडिंसगं विमाणं देव-

र्शनं तद्वा कल्याणप्राप्तिसूचकमसमुत्पन्नपूर्वं समुत्पद्यते, तद् यथा भगवतो महावीरस्यास्थिकग्रामे शूलपाणियक्षकृतोपसर्गावसाने, किं प्रयोजनं चेदं ? इत्याह—'अहातच्चं सुमिणं पासित्तए'त्ति यथा—येन प्रकारेण तथ्यः—सत्यो यथातथ्यः सर्वथा निर्व्यभिचार इत्यर्थः तं स्वप्नं—स्वप्नफलमुपचारात्तं द्रष्टुं—ज्ञातुम्, अवश्यंभाविनो मुक्त्यादेः शुभस्वप्नफलस्य दर्शनाय साधोः स्वप्नदर्शनमुपजायत इति भावः, क्वचित् 'सुजाणं'ति पाठः, तत्रावितथमवश्यंभावि सुयानं—सुगतिं द्रष्टुं—ज्ञातुं सुज्ञानं वा भाविशुभार्थपरिच्छेदं संवेदितुमिति, कल्याणसूचकावितथस्वप्नदर्शनाच्च भवति चित्तसमाधिरिति चित्तसमाधिस्थानमिदं द्वितीयं, तथा सञ्ज्ञानं सञ्ज्ञा सा च यद्यपि हेतुवाददृष्टिवाददीर्घकालिकोपदेशभेदेन क्रमेण विकलेन्द्रियसम्यग्दृष्टिसमनस्कसम्बन्धित्वात्त्रिधा भवति तथापीह दीर्घकालिकोपदेशसञ्ज्ञा ग्राह्येति, सा यस्यास्ति स सञ्ज्ञी—समनस्कस्तस्य ज्ञानं सञ्ज्ञिज्ञानं, तच्चेहाधिकृतसूत्रान्यथानुपपत्तेर्जातिस्मरणमेव, तद्वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, कस्मै प्रयोजनाय ? इत्याह—'पुव्वभवे सुमरित्तए'त्ति पूर्वभवान् स्मर्तुं, स्मृतपूर्वभवस्य च संवेगात्समाधिरुत्पद्यते इति समाधिस्थानमेतत् तृतीयमिति, तथा देवदर्शनं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्यते, देवा हि तस्य गुणित्वाद्दर्शनं ददति, किं फलं ? इत्याह—दिव्यां देवर्द्धि—प्रधानपरिवारादिरूपां दिव्यां देवद्युतिं—विशिष्टां शरीराभरणादिदीप्तिं दिव्यं देवानुभावं—उत्तमवैक्रियकरणादिप्रभावं द्रष्टुम्, एतद्दर्शनायेत्यर्थः, देवदर्शनाच्चागमार्थेषु श्रद्धानदार्ढ्यं धर्मे बहुमानश्च भवतीति ततश्चित्तसमाधिरिति देवदर्शनं चित्तसमाधिस्थानमिति चतुर्थं, तथा अवधिज्ञानं

एक्कारस उवासगपडिमाओ प० तं०—दंसणसावए १ कयव्वयकंमे २ सामाइअकडे ३ पोसहोववासनिरए ४ दिया वंभयारी रत्ति परिमाणकडे ५ दिआवि राओवि वंभयारी असिणाई विअडभोई मोलिकडे ६ सचित्तपरिण्णाए ७ आरंभपरिण्णाए ८ पेसपरिण्णाए ९ उद्दिट्ठभत्तपरिण्णाए १० समणभूए ११ आवि भवइ समणाउसो !, लोगंताओ इक्कारसएहिं एक्कारेहिं जोयणसएहिं अबाहाए जोइसंते पण्णत्ते, जंबूदीवे दीवे मंदरस्स पव्वयस्स एक्कारसहिं एक्कवीसेहिं जोयणसएहिं जोइसे चारं चरइ, समणस्स णं भगवओ महावीरस्स एक्कारस गणहरा होत्था, तं०—इंदभूई अग्गिभूई वाउभूई विअत्ते सोहम्मे मंडिए मोरियपुत्ते अकंपिए अयलभाए मेअज्जे पभासे, मूले नक्खत्ते एक्कारसतारे प०, हेट्ठिमगेविज्जयाणं देवाणं एक्कारससुत्तरं गेविज्जविमाणसतं भवइत्तिमक्खायं, मंदरे णं पव्वए धरणितलाओ सिहरतले एक्कारसभागपरिहीणे उच्चत्तेणं प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एक्कारस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं एक्कारस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एक्कारस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं एक्कारस पलिओवमाइं ठिई प०, लंतए कप्पे अत्थेगइयाणं देवाणं एक्कारस सागरोवमाइं ठिई प०, जे देवा वंभं सुबंभं वंभावत्तं वंभप्पभं बंभकंतं बंभवण्णं बंभलेसं बंभज्झयं वंभसिंगं वंभसिट्ठं बंभकूडं बंभुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं एक्कारस सागरोवमाइं ठिई प०, ते णं देवा एकारसर्हिं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं एक्कारसर्हिं वाससहस्साणं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे एक्कारसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं ११ ॥

यावच्चतुर्थी प्रतिमा भवतीति, तथा पञ्चमीप्रतिमायामष्टम्यादिषु पर्वस्वेकरात्रिकप्रतिमाकारी भवति, एतदर्थं च सूत्रमधिकृतसूत्रपुस्तकेषु न दृश्यते दशादिषु पुनरुपलभ्यते इति तदर्थ उपदर्शितः, तथा शेषदिनेषु दिवा ब्रह्मचारी 'रत्ती'ति रात्रौ किं ? अत आह—परीमाणं–स्त्रीणां तद्भोगानां वा प्रमाणं कृतं येन स परिमाणकृत इति, अयमत्र भावो–दर्शनव्रतसामायिकाष्टम्यादिपौषधोपेतस्य पर्वस्वेकरात्रिकप्रतिमाकारिणः शेषदिनेषु दिवा ब्रह्मचारिणो रात्राव-ब्रह्मपरिमाणकृतोऽस्नानस्यारात्रिभोजिनः अबद्धकच्छस्य पञ्च मासान् यावत्पञ्चमी प्रतिमा भवतीति, उक्तं च—"अट्ठ-मीचउद्दसीसु पडिमं ठाएगराईयं ॥ [पश्चार्द्धं] असिणाणवियडभोई मउलियडो दिवसबंभयारी य। रत्तिं परिमाणकडो पडिमावज्जेसु दियहेसु ॥ १ ॥"त्ति ॥ तथा दिवापि रात्रावपि ब्रह्मचारी 'असिणाइ'त्ति अस्नायी स्नानपरिवर्जकः, क्वचित्पठ्यते—'अनिसाइ'त्ति न निशायामत्तीत्यनिशादी 'वियडभोई'त्ति विकटे प्रकटप्रकाशे दिवा न रात्रावित्यर्थः, दिवापि चाप्रकाशदेशे न भुङ्क्ते–अशनाद्यभ्यवहरतीति विकटभोजी 'मोलिकडे'त्ति अबद्धपरिधानकच्छ इत्यर्थः, षष्ठी प्र-तिमेति प्रकृतं, अयमत्र भावः–प्रतिमापञ्चकोक्तानुष्ठानयुक्तस्य ब्रह्मचारिणः षण्मासान् यावत्षष्ठी प्रतिमा भवतीति, तथा 'सचित्त' इति सचेतनाहारः परिज्ञातः—तत्स्वरूपादिपरिज्ञानात्प्रत्याख्यातो येन स सचित्ताहारपरिज्ञातः श्रावकः सप्तमी प्रतिमेति प्रकृतं, इयमत्र भावना पूर्वोक्तप्रतिमाषट्कानुष्ठानयुक्तस्य प्रासुकाहारस्य सप्त मासान् याव-

१ अष्टमीचतुर्दश्योः प्रतिमां करोत्येकरात्रिकीं । अस्नानो दिवसभोजी मुत्कलकच्छ दिवा ब्रह्मचारी च । रात्रौ कृतपरिमाणः प्रतिमावर्जेषु दिवसेषु ॥ १ ॥

पोसहोववासनिरए चतुर्थी राइभत्तपरिण्णाए पञ्चमी सचित्तपरिण्णाए पष्ठी दिया वंभयारी राओ परिमाणकडे सप्तमी दियावि राओवि वंभयारी असिणाणए थावि भवति वोसट्ठकेसरोमनहे अष्टमी आरंभपरिण्णाए पेसणपरिण्णाए नवमी उदिट्ठभत्तवज्जए दशमी समणभूए यावि भवइत्ति समणाउसो एकादशीति, क्वचित्तु आरम्भपरिज्ञात इति नवमी प्रेष्यारम्भपरिज्ञात इति दशमी उद्दिष्टभक्तवर्जकः श्रमणभूतश्चैकादशीति, तथा जम्बूद्वीपे २ मन्दरस्य पर्वतस्यैकादश 'एगवीस'त्ति एकविंशतियोजनाधिकानि योजनशतानि 'अवाहाए' अवाधया व्यवधानेन कृत्वेति शेषः ज्योतिपं–ज्योतिश्चक्रं चारं–परिभ्रमणं चरति–आचरति, तथा लोकान्तात् णमित्यलङ्कारे एकादश शतानि 'एक्कारे'त्ति एकादशयोजनाधिकानि अवाधया–वाधारहितया कृत्वेति शेषः 'जोतिसंते'ति ज्योतिश्चक्रपर्यन्तः प्रज्ञप्त इति, इदं च वाचनान्तरं व्याख्यातं, उक्तं च—"एक्कारसेक्कवीसा सय एक्काराहिया य एक्कारा । मेरुअलोगावाहं जोइसचक्कं चरइ ठाइ ॥१॥" इति, अधिकृतवाचनायां पुनरिदमनन्तरं व्याख्यातमालापकद्वयं व्यत्ययेनाऽपि दृश्यते, 'विमाणसयं भवतित्तिमक्खायं'ति इह मकारस्यागमिकत्वादयमर्थो–विमानशतं भवतीतिकृत्वा आख्यातं—प्ररूपितं भगवता अन्यैश्च केवलिभिरिति सुधर्मस्वामिवचनं, तथा 'मंदरे णं पव्वए धरणितलाओ सिहरतले एक्कारसभागपरिहीणे उच्चत्तेणं पण्णत्ते' अस्यायमर्थः—मेरुर्भूतलादारभ्य शिखरतलमुपरिभागं यावद्विष्कम्भापेक्षयाऽङ्गुलादेरेकादशभागेनैकादशभागेन परिहीणो–हानिमुपगतः उच्चत्वेन–उपर्युपरि प्रज्ञप्तः, इयमत्र भावना–मन्दरो भूतले दश योजनसहस्राणि विष्क-

मूले दुवालस जोयणाइं विक्खंभेणं पण्णत्ता, जंबूदीवस्स णं दीवस्स वेइआ मूले दुवालस जोयणाइं विक्खभेणं पण्णत्ता, सव्वजहण्णिआ राई दुवालसमुहुत्तिआ पण्णत्ता, एवं दिवसोऽवि नायव्वो, सव्वट्ठसिद्धस्स णं महाविमाणस्स उवरिल्लाओ थुभिअग्गाओ दुवालस जोयणाइं उद्धं उप्पइआ ईसिपब्भारनामपुढवी पण्णत्ता, इसिपब्भाराए णं पुढवीए दुवालस नामधेज्जा पण्णत्ता, तंजहा— ईसित्ति वा इसिपब्भाराति वा तणूइ वा तणूयतरित्ति वा सिद्धित्ति वा सिद्धालएत्ति वा मुत्तीति वा मुत्तालएत्ति वा बंभेत्ति वा बंभवडिंसएत्ति वा लोकपडिपूरणेत्ति वा लोगग्गचूलिआइ वा, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइआणं नेरइयाणं बारस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं बारस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं बारस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं बारस पलिओवमाइं ठिई प०, लंतए कप्पे अत्थेगइयाणं देवाणं बारस सागरोवमाइं ठिई प०, जे देवा महिंदं महिंदज्झयं कंबुं कंबुग्गीवं पुंखं सुपुंखं महापुंखं पुंडं सुपुंडं महापुंडं नरिंदं नरिंदकंतं नरिंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं बारस सागरोवमाइं ठिई प० ते णं देवा बारसण्हं अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसि णं देवाणं बारसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे बारसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १२ ॥

द्वादशस्थानमथ, तच्च सुगमं, नवरं स्थितिसूत्रेभ्योऽर्वागेकादश सूत्राण्याह, तत्र भिक्षूणां विशिष्टसंहननश्रुतवतां

शुद्धः, तस्यैवाविधिनोपसम्पन्नस्यानुपसम्पन्नस्य वा पार्श्वस्थादेर्वा स्त्रिया वा वाचनादि कुर्वंस्तथैव वेलात्रयोपरि विसम्भोग्यः, तथा 'भत्तपाणे'त्ति उपधिद्वारवदवसेयं, नवरमिह भोजनं दानं च परिकर्मपरिभोगयोः स्थाने वाच्यमिति, तथा 'अंजलीपग्गहेत्ति य' इहेतिशब्दा उपदर्शनार्थाः चकाराः समुच्चयार्थाः, तत्रोपलक्षणत्वादञ्जलिप्रग्रहस्य वन्दनादिकमपीह द्रष्टव्यं, तथाहि—सम्भोगिकानामन्यसम्भोगिकानां वा संविग्नानां वन्दनकं—प्रणाममञ्जलिप्रग्रहं नमः क्षमाश्रमणेभ्य इति भणनं, आलोचनासूत्रार्थनिमित्तनिपद्याकरणं च कुर्वन् शुद्धः पार्श्वस्थादेरेतानि कुर्वंस्तथैव सम्भोग्यो विसम्भोग्यश्चेति, तथा 'दायणे य'त्ति दानं, तत्र सम्भोगिकः सम्भोगिकाय [वस्त्रादिभिः शिष्यगणोपग्रहासमर्थे सम्भोगिके]ऽन्यसम्भोगिकाय वा शिष्यगणं यच्छन् शुद्धः, निष्कारणं विसम्भोगिकस्य पार्श्वस्थादेर्वा संयत्या वा तं यच्छंस्तथैव सम्भोग्यो विसम्भोग्यश्चेति, तथा 'निकाए य'त्ति निकाचनं छन्दनं निमन्त्रणमित्यनर्थान्तरं, तत्र शय्योपध्याहारैः शिष्यगणप्रदानेन स्वाध्यायेन च सम्भोगिकः सम्भोगिकं निमन्त्रयन् शुद्धः,शेषं तथैव, तथा 'अब्भुट्ठाणेत्ति यावरे' त्ति अभ्युत्थानमासनत्यागरूपमित्यपरं सम्भोगासम्भोगस्थानमित्यर्थः, तत्राभ्युत्थानं पार्श्वस्थादेः कुर्वंस्तथैवासम्भोग्यः, उपलक्षणत्वादभ्युत्थानस्य किङ्करतां च—प्राघूर्णकग्लानाद्यवस्थायां किं विश्रामणादि करोमीत्येवंप्रश्नलक्षणां तथाऽभ्यासकरणं-पार्श्वस्थादिधर्माच्च्युतस्य पुनस्तत्रैव संस्थापनलक्षणं, तथा अविभक्तिं च—अपृथग्भावलक्षणां कुर्वन्नशुद्धोऽसम्भोग्यश्चापि, एतान्येव यथाऽऽगमं कुर्वन् शुद्धः सम्भोग्यश्चेति, तथा 'किइकम्मस्स य करणे'त्ति कृतिकर्म—वन्द-

प्रायश्चिन्तिनोऽपि न भवन्तीति, आह च—"संमणुन्नमसमणुन्ने अदिन्नणाभवगिण्हमाणे वा। सम्भोग वीसुकरणं [पृथक्करणमित्यर्थः ] इयरे य अलंभ पेल्लंति ॥ १ ॥" [ इतरान् पार्श्वस्थादीनित्यर्थः ] तथा 'सन्निसिज्जा य'त्ति सन्निषद्या—आसनविशेषः, सा च सम्भोगासम्भोगकारणं भवति, तथाहि—संनिषद्यागत आचार्यो निषद्यागतेन सम्भोगिकाचार्येण सह श्रुतपरिवर्त्तनां करोति शुद्धः, अथामनोज्ञपार्श्वस्थादिसाध्वीगृहस्थैः सह तदा प्रायश्चित्ती भवति, तथा अक्षनिषद्यां विनाऽनुयोगं कुर्वतः शृण्वतश्च प्रायश्चित्तं, तथा निषद्यायामुपविष्टः सूत्रार्थौ पृच्छति अतिचारान् वाऽऽलोचयति यदि तदा तथैवेति, तथा 'कहाए य पबंधणे'त्ति कथा—वादादिका पञ्चधा तस्याः प्रबन्धनं—प्रबन्धेन करणं कथाप्रबन्धनं, तत्र सम्भोगासम्भोगौ भवतः, तत्र मतमभ्युपगम्य पञ्चावयवेन त्र्यवयवेन वा वाक्येन यत्तत्समर्थनं स छलजातिविरहितो भूतार्थान्वेषणपरो वादः, स एव छलजातिनिग्रहस्थानपरो जल्पः, यत्रैकस्य पक्षपरिग्रहोऽस्ति नापरस्य सा दूषणमात्रप्रवृत्ता वितण्डा, तथा प्रकीर्णकथा चतुर्थी, सा चोत्सर्गकथा द्रव्यास्तिकनयकथा वा, तथा निश्चयकथा पञ्चमी, सा चापवादकथा पर्यायास्तिकनयकथा वेति, तत्राद्यास्तिस्रः कथाः श्रमणीवर्जैः सह करोति, श्रमणीभिस्तु सह कुर्वन् प्रायश्चित्ती, चतुर्थवेलायां चालोचयन्नपि विसम्भोगार्ह इति रूपकद्वयस्य संक्षेपार्थः विस्तरार्थस्तु निशीथपञ्चमोद्देशकभाष्यादवसेय इति, तथा 'दुवालसावत्ते किइकम्मे'त्ति द्वादशावर्त्तं कृतिकर्म—वन्दनकं

१ गमनोज्ञामनोज्ञयोरदत्तमनाभाव्ये गृह्णति वा। सभोगविष्वक्करणं इतराश्चालाभे प्रेरयन्ति ॥ १ ॥

चतुर्विंशतिघटिकाप्रमाणा, एवं 'दिवसोऽवि' त्ति सर्वजघन्यो द्वादशमौहूर्त्तिक एवेत्यर्थः, स च दक्षिणायनपर्यन्तदिवस इति । माहेन्द्रमाहेन्द्रध्वजकम्बुकम्बुग्रीवादीनि त्रयोदश विमाननामानीति ॥ १२ ॥

तेरस किरियाठाणा प० तं०—अट्ठादंडे अणट्ठादंडे हिंसादंडे अकम्हादंडे दिट्ठिविपरिआसिआदंडे मुसावायवत्तिए अदिन्नादाणवत्तिए अज्झत्थिए मानवत्तिए मित्तदोसवत्तिए मायावत्तिए लोभवत्तिए इरिआवहिए नामं तेरसमे, सोहम्मीसाणेसु कप्पेसु तेरस विमाणपत्थडा प०, सोहम्मवर्डिसगे णं विमाणे णं अद्धतेरसजोयणसयसहस्साइं आयामविक्खंभेणं प०, एवं ईसाणवर्डिसगेवि, जलयरपंचिंदिअतिरिक्खजोणिआणं अद्धतेरस जाइकुलकोडीजोणीपमुहसयसहस्साइं प०, पाणाउस्स णं पुव्वस्स तेरस वत्थू प०, गब्भवक्कंतिअपंचेंदिअतिरिक्खजोणिआणं तेरसविहे पओगे प० तं०—सच्चमणपओगे मोसमणपओगे सच्चामोसमणपओगे असच्चामोसमणपओगे सच्चवइपओगे मोसवइपओगे सच्चामोसवइपओगे असच्चामोसवइपओगे ओरालिअसरीरकायपओगे ओरालिअमीससरीरकायपओगे वेउव्विअसरीरकायपओगे वेउव्विअमीससरीरकायपओगे कम्मसरीरकायपओगे, सूरमंडलं जोयणेणं तेरसेहिं एगसट्ठिभागेहिं जोयणस्स ऊणं प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं तेरस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं तेरस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं तेरस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइआणं देवाणं तेरस पलिओवमाइं ठिई प०, लंतए कप्पे [सु] अत्थेगइआणं देवाणं तेरस सागरोवमाइं ठिई प०, जे देवा वज्जं सुवज्जं वज्जावत्तं वज्जप्पभं वज्जकंतं वज्जवण्णं वज्जलेसं वज्जरूवं वज्जसिंगं वज्जसिट्ठं वज्जकूडं वज्जुत्तरवर्डिसगं वइरं वइरावत्तं

त्तानपेक्षः शोकाभि(दि)भव इति भावः ८ तथा मानप्रत्ययो—जात्यादिमदहेतुकः ९ तथा मित्रद्वेषप्रत्ययः—मातापित्रादीनामल्पेऽप्यपराधे महादण्डनिर्वर्त्तनमिति भावः १० मायाप्रत्ययो मायानिबन्धनः ११ एवं लोभप्रत्ययोऽपि १२ ऐर्यापथिकः केवलयोगप्रत्ययः कर्मबन्धः—उपशान्तमोहादीनां सातवेदनीयबन्धः १३। तथा 'विमाणपत्थड'त्ति विमानप्रस्तटा उत्तराधर्यव्यवस्थिताः, तथा 'सोहम्मवडिंसए'त्ति सौधर्मस्य देवलोकस्यार्द्धचन्द्राकारस्य पूर्वापरायतस्य दक्षिणोत्तरविस्तीर्णस्य मध्यभागे त्रयोदशप्रस्तटे शक्रावासभूतं विमानं सौधर्मावतंसकं सौधर्मदेवलोकस्यावतंसकः—शेखरकः स इव प्रधानत्वात् इत्येवं यथार्थनामकमिति, णंकारो वाक्यालङ्कारे, अर्द्धं त्रयोदशं येषु तान्यर्द्धत्रयोदशानि तानि च तानि योजनशतसहस्राणि चेति विग्रहः सार्द्धानि द्वादशेत्यर्थः, तथाऽर्द्धत्रयोदशानि जातौ—जलचरपञ्चेन्द्रियतिर्यग्गतौ कुलकोटीनां योनिप्रमुखानि—उत्पत्तिस्थानप्रभवानि यानि शतसहस्राणि तानि तथोच्यन्त इति, तथा 'पाणाउस्स'त्ति यत्र प्राणिनामायुर्विधानं सभेदमभिधीयते तत्प्राणायुर्द्वादशं पूर्वं तस्य त्रयोदश वस्तूनि—अध्ययनवद्विभागविशेषाः, तथा गर्भे—गर्भाशये व्युत्क्रान्तिः—उत्पत्तिर्येषां ते गर्भव्युत्क्रान्तिकाः, ते च ते पञ्चेन्द्रियतिर्यग्योनिकाश्चेति विग्रहः, प्रयोजनं—मनोवाक्कायानां व्यापारणं प्रयोगः स त्रयोदशविधः, पञ्चदशानां प्रयोगाणां मध्ये आहारकाहारकमिश्रलक्षणकायप्रयोगद्वयस्य तिरश्चामभावात्, तौ हि संयमिनामेव स्तः, संयमश्च संयतमनुष्याणामेव न तिरश्चामिति, तत्र सत्यासत्योभयानुभयस्वभावाश्चत्वारो मनःप्रयोगाः वाक्प्रयोगाश्चेति अष्टौ पुनरौदारिकादयः पञ्च कायप्रयोगाः एवं त्र-

रयणे सेणावइरयणे गाहावइरयणे पुरोहियरयणे वड्ढइरयणे आसरयणे हत्थिरयणे असिरयणे दंडरयणे चक्करयणे छत्तरयणे चम्मरयणे मणिरयणे कागिणिरयणे, जंबुद्दीवे णं दीवे चउद्दस महानईओ पुव्वावरेण लवणसमुद्दं समप्पंति, तं० गंगा सिंधू रोहिआ रोहिअंसा हरी हरिकंता सीआ सीओदा नरकन्ता नारिकांता सुवण्णकूला रुप्पकूला रत्ता रत्तवई, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं चउद्दस पलिओवमाइं ठिई प०, पञ्चमीए णं पुढवीए अत्थेगइयाणं नेरइयाणं चउद्दस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं चउद्दस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं चउद्दस पलिओवमाइं ठिई प०, लंतए कप्पे[सु] देवाणं अत्थेगइयाणं चउद्दस सागरोवमाइं ठिई प०, महासुक्के कप्पे देवाणं अत्थेगइयाणं जहण्णेणं चउदस सागरोवमाइं ठिई प०, जे देवा सिरिकंतं सिरिमहिअं सिरिसोमनसं लंतयं काविट्ठं महिंदकंतं महिंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं चउद्दस सागरोवमाइं ठिई प० ते णं देवा चउद्दसहिं अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसिणं देवाणं चउद्दसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे चउद्दसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १४ ॥

अथ चतुर्दशस्थानकं सुबोधं, नवरमिहाष्टौ सूत्राण्यर्वाक् स्थितिसूत्रादिति, तत्र चतुर्दश 'भूतग्रामाः' भूतानि—जीवाः तेषां ग्रामाः—समूहाः भूतग्रामाः, तत्र सूक्ष्माः सूक्ष्मनामकर्मोदयवर्त्तित्वात् पृथिव्यादय एकेन्द्रियाः, किंभूता ?— अपर्याप्तकाः—तत्कर्मोदयादपरिपूर्णस्वकीयपर्याप्तय इत्येको ग्रामः, एवमेते एव पर्याप्तकाः-तथैव परिपूर्णस्वकीयपर्या-

असिपत्ते[9] धणु[10] कुम्भे[11], वालुए[12] वेअरणीति[13] अ। खरस्सरे[14] महाघोसे[15], एते पन्नरसाहिआ ॥२॥ णमी णं अरहा पन्नरस धणूइं उड्ढं उच्चत्तेणं होत्था, धुवराहू णं बहुलपक्खस्स पडिवए पन्नरसभागं पन्नरसभागेणं चंदस्स लेसं आवरेत्ताणं चिट्ठति, तंजहा–पढमाए पढमं भागं बीआए दुभागं तइआए तिभागं चउत्थीए चउभागं पञ्चमीए पञ्चभागं छट्ठीए छभागं सत्तमीए सत्तभागं अट्ठमीए अट्ठभागं नवमीए नवभागं दसमीए दसभागं एक्कारसीए एक्कारसभागं बारसीए बारसभागं तेरसीए तेरसभागं चउद्दसीए चउद्दसभागं पन्नरसेसु पन्नरसभागं, तं चेव सुक्कपक्खस्स य उवदंसेमाणे उवदंसेमाणे चिट्ठति, तंजहा–पढमाए पढमं भागं जाव पन्नरसेसु पन्नरसभागं, छ णक्खत्ता पन्नरसमुहुत्तसंजुत्ता प० तं०—सतभिसय भरणि अद्दा असलेसा साई तहा जेट्ठा। एते छण्णक्खत्ता पन्नरसमुहुत्तसंजुत्ता ॥१॥ चेत्तासोएसु णं मासेसु पन्नरसमुहुत्तो दिवसो भवति, एवं चेत्तमासेसु पण्णरसमुहुत्ता राई भवति, विज्ञाअणुप्पवायस्स णं पुव्वस्स पन्नरस वत्थू पण्णत्ता, मणूसाणं पण्णरसविहे पओगे प० तं०–सच्चमणपओगे मोसमणपओगे सच्चमोसमणपओगे असच्चामोसमणपओगे सच्चवइपओगे मोसवइपओगे सच्चमोसवइपओगे असच्चामोसवइपओगे ओरालिअसरीरकायपओगे ओरालिअमीससरीरकायपओगे वेउव्वियसरीरकायपओगे वेउव्विअमीससरीरकायपओगे आहारयसरीरकायप्पओगे आहारयमीससरीरकायप्पओगे कम्मयसरीरकायपओगे, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइआणं नेरइआणं पण्णरस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइआणं पण्णरस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं पण्णरस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइआणं देवाणं पण्णरस पलिओवमाइं ठिई प०, महासुक्के कप्पे अत्थेगइआणं देवाणं पण्णरस सागरोवमाइं ठिई प०, जे देवा

यित्वा खादयति वर्णतश्च महाकाल इति ८, 'असिपत्ते'त्ति असिः—खड्गस्तदाकारपत्रवद्वनं विकुर्व्य यस्तत्समाश्रितान् नारकानसिपत्रपातनेन तिलशश्छिनत्ति सोऽसिपत्रः ९, 'धणु'त्ति यो धनुर्विमुक्तार्द्धचन्द्रादिबाणैः कर्णादीनां छेदन-भेदनादि करोति स धनुरिति १०, 'कुंभे'त्ति यः कुम्भादिषु तान् पचति स कुम्भः ११, 'वालु'त्ति यः कदम्बपुष्पाकारासु वज्राकारासु वैक्रियवालुकासु तप्तासु चणकानिव तान् पचति स वालुका इति १२, 'वेयरणी इय'त्ति वैतरणीति च परमाधार्मिकः, स च पूयरुधिरत्रपुताम्रादिभिरतितापात्कलकलायमानैर्भृतां विरूपं तरणं प्रयोजनमस्या इति वैतरणीति यथार्थां नदीं विकुर्व्य तत्तारणेन कदर्थयति नारकानिति १३, 'खरस्सरे'त्ति यो वज्रकण्टकाकुलं शाल्मलीवृक्षं नारकमारोप्य खरस्वरं कुर्वन्तं कुर्वन् वा कर्षति स खरस्वर इति १४, 'महाघोस'त्ति यो भीतान् पलायमानान् नारकान् पशूनिव वाटकेषु महाघोषं कुर्वन्निरुणद्धि स महाघोष इति १५, 'एवमेव (एमे) पन्नरसाहिय'त्ति 'एव'मित्यम्बादिक्रमेणैते परमाधार्मिकाः पञ्चदशाख्याताः—कथिता जिनैरिति ॥२॥ 'धुवराहू ण' मित्यादि, द्विविधो राहुः भवति—पर्वराहुर्ध्रुवराहुश्च, तत्र यः पर्वणि—पौर्णमास्याममावास्यायां वा चन्द्रादित्ययोरुपरागं करोति स पर्वराहुः, यस्तु चन्द्रस्य सदैव सन्निहितः सञ्चरति स ध्रुवराहुः, आह च—'किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहिअं। चउरंगुलमप्पत्तं हेट्ठा चंदस्स तं चरइ ॥ १ ॥'' त्ति, ततोऽसौ ध्रुवराहुः 'ण'मित्यलङ्कारे बहुलपक्षस्य प्रतीतस्य 'पाडिवयं' ति

१ कृष्णं राहुविमानमधस्तान्नित्यं चन्द्रेण भवत्यविरहितम्। चतुरङ्गुलमप्राप्तमधस्ताच्चन्द्रस्य तच्चरति ॥ १ ॥

पञ्चदश मुहूर्त्तान् यावच्चन्द्रेण सह संयोगो येषा तानि पञ्चदशमुहूर्त्तसंयोगानि, तद्यथा—'सयभिसया भरणीओ अद्दा अस्सेस साइ जेट्ठा य । एए छन्नक्खत्ता पन्नरसमुहुत्तसंजुत्ता ॥१॥' संयुक्तं संयोग इति, तथा 'चेत्तासोएसु मासेसु'—त्ति, स्थूलन्यायमाश्रित्य चैत्रेऽश्वयुजि च मासे पञ्चदशमुहूर्त्तो दिवसो भवति रात्रिश्च, निश्चयतस्तु मेषसङ्क्रान्तिदिने तुलासंक्रान्तिदिने चैवं दृश्यमिति । 'पओगे'त्ति प्रयोजनं प्रयोगः सपरिस्पन्द आत्मनः क्रियापरिणामो व्यापार इत्यर्थः, अथवा प्रकर्षेण युज्यते—संयुज्यते सम्बध्यतेऽनेन क्रियापरिणामेन कर्मणा सहात्मेति प्रयोगः, तत्र सत्यार्थालोचननिबन्धनं मनः सत्यमनस्तस्य प्रयोगो—व्यापारः सत्यमनःप्रयोगः, एवं शेषेष्वपि, नवरमौदारिकशरीरकायप्रयोग औदारिकशरीरमेव पुद्गलस्कन्धसमुदायरूपत्वेनोपचीयमानत्वात् कायस्तस्य प्रयोग इति विग्रहः, अयं च पर्याप्तकस्यैव वेदितव्यः, तथौदारिकमिश्रकायप्रयोगः अयं चापर्याप्तकस्येति, इह चोत्पत्तिमाश्रित्यौदारिकस्य प्रारब्धस्य प्रधानत्वादौदारिकः कार्मणेन मिश्रः, यदा तु मनुष्यः पञ्चेन्द्रियतिर्यङ् बादरवायुकायिको वा वैक्रियं करोति तदौदारिकस्य प्रारम्भकत्वेन प्रधानत्वादौदारिको वैक्रियेण मिश्रो यावद्वैक्रियपर्याप्त्या न पर्याप्तिं गच्छति, एवमाहारकेणाप्यौदारिकस्य मिश्रताऽवसेयेति, तथा वैक्रियशरीरकायप्रयोगो वैक्रियपर्याप्तकस्य, तथा वैक्रियमिश्रशरीरकायप्रयोगस्तदपर्याप्तकस्य देवस्य नारकस्य वा कार्मणेनैव लब्धिवैक्रियपरित्यागे वा औदारिकप्रवेशाद्धायामौदारिकोपादानाय प्रवृत्तेर्वैक्रियप्राधान्यादौदारिकेणापि मिश्रतेत्येके, तथा आहारकशरीरकायप्रयोगस्तदभिनिर्वृत्तौ सत्यां तस्यैव प्रधानत्वात्, तथा आ-

प०, लवणे णं समुद्दे सोलस जोयणसहस्साइं उस्सेहपरिवुड्ढीए प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं सोलस पलिओवमाइं ठिई प०, पंचमाए पुढविए अत्थेगइयाणं देवाणं सोलस सागरोवमाठिती प०, असुरकुमाराणं देवाणं अत्थेगइयाणं सोलस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं सोलस पलिओवमाइं ठिई प०, महासुक्के कप्पे देवाणं अत्थेगइयाणं सोलस सागरोवमाइं ठिई प०, जे देवा आवत्तं विआवत्तं नंदिआवत्तं महाणंदिआवत्तं अंकुसं अंकुसपलंबं भद्दं सुभद्दं महाभद्दं सव्वओभद्दं भद्दुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं सोलस सागरोवमाइं ठिई प० ते णं देवा सोलसहिं अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसि णं देवाणं सोलसवाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे सोलसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतंकरिस्संति ॥ सूत्रं १६ ॥

अथ षोडशस्थानकमुच्यते सुगमं चेदं, नवरं गाथाषोडशकादीनि स्थितिसूत्रेभ्य आरात्सप्त सूत्राणि, तत्र सूत्रकृताङ्गस्य प्रथमश्रुतस्कन्धे षोडशाध्ययनानि तेषां च गाथाभिधानं षोडशमिति गाथाभिधानमध्ययनं षोडशं येषां तानि गाथाषोडशकानि, तत्र 'समए'त्ति नास्तिकादिसमयप्रतिपादनपरमध्ययनं समय एवोच्यते, वैतालीयच्छन्दोजातिबद्धं वैतालीयम्, एवं शेषाणां यथाभिधेयं नामानि, 'समोसरणे'त्ति समवसरणं त्रयाणां त्रिषष्ट्यधिकानां प्रवादिशतानां मतपिण्डनरूपं, 'अहातहिए'त्ति यथा वस्तु तथा प्रतिपाद्यते यत्र तद्यथातथिकं, ग्रन्थाभिधायकं ग्रन्थः, 'जम-

पेहासंजमे उवेहासंजमे अवहट्टुसंजमे पमज्जणासंजमे मणसंजमे वइसंजमे कायसंजमे, माणुसुत्तरे णं पव्वए सत्तरसएक्कवीसे जोयणसए उड्ढं उच्चत्तेणं प०, सव्वेसिंपि णं वेलंधरअणुवेलंधरणागराईणं आवासपव्वया सत्तरसएक्कवीसाइं जोयणसयाइं उड्ढं उच्चत्तेणं प०, लवणे णं समुद्दे सत्तरस जोयणसहस्साइं सव्वग्गेणं प०, इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ सातिरेगाइं सत्तरस जोयणसहस्साइं उड्ढं उप्पतित्ता ततो पच्छा चारणाणं तिरिआ गती पवत्तति, चमरस्स णं असुरिंदस्स असुररण्णो तिगिंछिकूडे उप्पायपव्वए सत्तरस एक्कवीसाइं जोयणसयाइं उड्ढं उच्चत्तेणं प०, बलिस्स णं असुरिंदस्स रुअगिंदे उप्पायपव्वए सत्तरस एक्कवीसाइं जोयणसयाइं उड्ढं उच्चत्तेणं प०, सत्तरसविहे मरणे प०—आवीईमरणे ओहिमरणे आयंतियमरणे वलायमरणे वसट्टमरणे अंतोसल्लमरणे तब्भवमरणे बालमरणे पंडितमरणे बालपंडितमरणे छउमत्थमरणे केवलिमरणे वेहाणसमरणे गिद्धपिट्ठमरणे भत्तपच्चक्खाणमरणे इंगिणिमरणे पाओवगमणमरणे, सुहुमसंपराए णं भगवं सुहुमसंपरायभावे वट्टमाणे सत्तरस कम्मपगडीओ णिबंधति तं०—आभिणिबोहियणाणावरणे सुयणाणावरणे ओहिणाणावरणे मणपज्जवणाणावरणे केवलणाणावरणे चक्खुदंसणावरणे अचक्खुदंसणावरणे ओहीदंसणावरणे केवलदंसणावरणे सायावेयणिज्जं जसोकित्तिनामं उच्चागोयं दाणंतरायं लाभंतरायं भोगंतरायं उवभोगंतरायं वीरिअअंतरायं, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइआणं नेरइयाणं सत्तरस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं उक्कोसेणं सत्तरस सागरोवमाइं ठिई प०, छट्ठीए पुढवीए अत्थेगइआणं जहण्णेणं सत्तरस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइआणं सत्तरस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइआणं देवाणं सत्तरस पलिओवमाइं ठिई प०, महासुक्के कप्पे देवाणं उक्कोसेणं सत्तरस सागरोवमाइं ठिई प०, सहस्सारे कप्पे देवाणं जहण्णेणं सत्तरस सागरोवमाइं ठिई प०, जे देवा सामाणं सुसामाणं

दगं समुद्दस्स। वेलंधर आवासा लवणे य चउदिसिं चउरो ॥४॥ पुव्वदिसा अणुकमसो गोथुभ १ दगभास २ संख ३ दगसीमा ४। गोथुभे १ सिवए २ संखे ३ मणोसिले ४ नागरायाणो ॥५॥ अणुवेलंधरवासा लवणे विदिसासु संठिआ चउरो। कक्कोडे १ विज्जुप्पभे २ केलास ३ ऽरुणप्पभे ४ चेव ॥६॥ कक्कोडय कद्दमए केलासऽरुप्पभेत्थ[नाग]रायाणो। बायालीससहस्से गंतुं उयहिंमि सव्वेवि ॥७॥ चत्तारि य जोयणसए तीसे कोसं च उग्गया भूमी। सत्तरस जोयणसए इगवीसे ऊसिआ सव्वे ॥८॥" त्ति 'चारणाणं'ति जङ्घाचारणानां विद्याचारणानां च 'तिरिअ'त्ति तिर्यग् रुचकादिद्वीपगमनायेति, तिगिञ्छिकूट उत्पातपर्वतो यत्रागत्य मनुष्यक्षेत्राभिगमनायोत्पतति, स चेतोऽसङ्ख्याततमेऽरुणोदयसमुद्रे दक्षिणतो द्विचत्वारिंशतं योजनसहस्राण्यतिक्रम्य भवति, रुचकेन्द्रोत्पातपर्वतस्त्वरुणोदयसमुद्र एव उत्तरतो एवमेव भवतीति, 'आवीईमरणे'त्ति आ—समन्ताद्वीचय इव वीचयः—आयुर्दलिकविच्युतिलक्षणावस्था यस्मिंस्तदावीचि अथवा वीचिः—विच्छेदस्तदभावादवीचि, दीर्घत्वं तु प्राकृतत्वात्तदेवंभूतं मरणमावीचिमरणं—प्रतिक्षणमायुर्द्रव्यविचटनलक्षणं, तथाऽवधिः—मर्यादा तेन मरणमवधिमरणं, यानि हि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते यदि पुनस्तान्येवानुभूय मरिष्यति तदा तदवधिमरणमुच्यते, तद्द्रव्यापेक्षया पुनस्तद्ग्रहणावधिं

१ पूर्वदिगनुक्रमतो गोस्तूभदकभासशङ्खदकसीमानः। गोस्तूभशिवशङ्खमन शिला नागराजाः ॥ ४ ॥ अनुवेलन्धरावासा लवणे विदिक्षु चत्वारः संस्थिताः। कर्कोटको विद्युत्प्रभः कैलासोऽरुणप्रभश्चैव ॥ ५ ॥ कर्कोटककर्दमककैलासोऽरुणप्रभोऽत्र राजानः। द्वाचत्वारिंशत् सहस्राणि गत्वोदधौ सर्वे ॥ ६ ॥ चत्वारि योजनशतानि त्रिंशत्क्रोश चोद्गता भूमिः। सप्तदशयोजनशतानि एकविंशान्युच्छ्रिता सर्वे ॥ ७ ॥

यद्रूढम्, तथा इङ्ग्यते प्रतिनियतदेश एव चेष्ट्यतेऽस्यामनशनक्रियायामितीङ्गिनी तया मरणमिङ्गिनीमरणम्, तद्धि चतुर्विधाहारप्रत्याख्यातुर्निष्प्रतिकर्मशरीरस्येङ्गितदेशाभ्यन्तरवर्त्तिन एवेति, तथा पादपस्येवोपगमनम्—अवस्थानं यस्मिन् तत्पादपोपगमनं तदेव मरणमिति विग्रहः, इदं च यथा पादपः क्वचित् कथञ्चिद् निपतितः सममसममिति चाविभावयन्निश्चलमेवास्ते तथा यो वर्त्तते तस्य तद्भवतीति। तथा सूक्ष्मसम्परायः उपशमकः क्षपको वा सूक्ष्मलोभकपायकिट्टिकावेदको भगवान्—पूज्यत्वात् सूक्ष्मसम्परायभावे वर्त्तमानः-तत्रैव गुणस्थानकेऽवस्थितः नातीतानागतसूक्ष्मसम्परायपरिणाम इत्यर्थः सप्तदश कर्मप्रकृतीर्निबध्नाति विंशत्युत्तरे बन्धप्रकृतिशतेऽन्या न बध्नातीत्यर्थः, पूर्वतरगुणस्थानकेषु बन्धं प्रतीत्य तासां व्यवच्छिन्नत्वात्, तथोक्तानां सप्तदशानां मध्यादेका सातप्रकृतिरुपशान्तमोहादिषु बन्धमाश्रित्यानुयाति, शेषाः षोडशैव व्यवच्छिद्यन्ते, यदाह—"नाणं ५ तराय १० दसगं दंसण चत्तारि १४ उच्च १५ जसकित्ती १६। एया सोलसपयडी सुहुमकसायंमि वोच्छिन्ना ॥ १ ॥" सूक्ष्मसम्परायात्परे न बध्नन्तीत्यर्थः, सामानादीनि सप्तदश विमानानां नामानीति ॥ १७ ॥

अट्ठारसविहे बंभे पं० तं०—ओरालिए कामभोगे णेव सयं मणेणं सेवइ नोवि अण्णं मणेणं सेवावेइ मणेणं सेवंतं पि अण्णं न समणुजाणाइ ओरालिए कामभोगे णेव सयं वायाए सेवइ नोवि अण्णं वायाए सेवावेइ वायाए सेवंतंपि अण्णं न समणुजाणाइ ओरालिए कामभोगे णेव सयं कायेणं सेवइ णोवि यऽण्णं काएणं सेवावेइ काएणं सेवंतंपि अण्णं न स मणुजाणाइ, दिव्वे

ठिई प० ते णं देवा णं अट्ठारसेहिं अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा-नीससंति वा तेसि णं देवाणं अट्ठारस-वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धियां जे अट्ठारसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुचिस्संति परि-निव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १८ ॥

अथाष्टादशस्थानकम्, इह चाष्टौ सूत्राणि स्थितिसूत्रेभ्योऽर्वाक् सुगमानि च, नवरं 'वंभे'त्ति ब्रह्मचर्यं यथौदारिक-कामभोगान्–मनुष्यतिर्यक्सम्बन्धिविषयान् तथा दिव्यकामभोगान्–देवसम्बन्धिन इत्यर्थः । तथा 'सखुड्डगविय-त्ताणं'ति सह क्षुद्रकैर्व्यक्तैश्च ये ते सक्षुद्रकव्यक्ताः तेषां, तत्र क्षुद्रका–वयसा श्रुतेन वाऽव्यक्ताः, व्यक्तास्तु ये वयःश्रुता-भ्यां परिणताः, स्थानानि–परिहारसेवाश्रयवस्तूनि 'व्रतपट्कं' महाव्रतानि रात्रिभोजनविरतिश्च 'कायषट्कं' पृथिवी-कायादि, अकल्पः–अकल्पनीयपिण्डशय्यावस्त्रपात्ररूपः पदार्थः, 'गृहिभाजनं'स्थाल्यादिः पर्यङ्को–मञ्चकादि निषद्या–स्त्रिया सहासनं 'स्नानं' शरीरक्षालनं 'शोभावर्जनं' प्रतीतं। तथा 'आचारस्य' प्रथमाङ्गस्य सचूलिकाकस्य–चूडासमन्वि-तस्य, तस्य पिण्डैषणाद्याः पञ्च चूलाः द्वितीयश्रुतस्कन्धात्मिकाः स च नवब्रह्मचर्याभिधानाध्ययनात्मकप्रथमश्रुतस्कन्ध-रूपः, तस्यैव चेदं पदप्रमाणं न चूलानां, यदाह–"नववंभचेरमइओ अट्ठारस पयसहस्सीओ वेओ । हवइ य सपंचचूलो वहुवहुतरओ पयग्गेणं ॥१॥" त्ति, यच्च सचूलिकाकस्येति विशेषणं तत्तस्य चूलिकासत्ताप्रतिपादनार्थं, न तु पदप्रमा-

---

१ नवब्रह्मचर्यमयोऽष्टादशपदसाहस्रिको वेद । भवति च सपञ्चचूलो बहुबहुतरकः पदाग्रेण ॥ १ ॥

तित्थयरा अगारवासमज्झे वसित्ता मुंडे भवित्ता णं अगाराओ अणगारिअं पव्वइआ, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइआणं नेरइआणं एगूणवीस पलिओवमाइं ठिई प०, छट्ठीए पुढवीए अत्थेगइआणं नेरइयाणं एगूणवीससागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइआणं एगूणवीसपलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं एगूणवीसं पलिओवमाइं ठिई प०, आणयकप्पे अत्थेगइआणं देवाणं उक्कोसेणं एगूणवीससागरोवमाइं ठिई प०, पाणए कप्पे अत्थेगइआणं देवाणं जहण्णेणं एगूणवीससागरोवमाइं ठिई प०, जे देवा आणतं पाणतं णतं विणतं घणं सुसिरं इंदं इंदोकंतं इंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं एगूणवीससागरोवमाइं ठिई प०, ते णं देवा एगूणवीसाए अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं एगूणवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिया जीवा जे एगूणवीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणं अंतं करिस्संति ॥ सूत्रं १९ ॥

अथैकोनविंशतितमस्थानं, तत्र स्थितिसूत्रेभ्यः पञ्च सूत्राणि सुगमानि च, नवरं ज्ञातानि—दृष्टान्तास्तत्प्रतिपादकान्यध्ययनानि षष्ठाङ्गप्रथमश्रुतस्कन्धवर्त्तीनि, 'उक्खित्ते'त्यादि सार्द्धं रूपकद्वयम्, इदं च षष्ठाङ्गाधिगमादवसेयमिति, तथा 'जंबुद्दीवे णं' इत्यादौ भावना—सूर्यौ स्वस्थानादुपरि योजनशतं तपतोऽधश्चाष्टादश शतानि, तत्र च समभूतलेऽष्टौ भवन्ति, दश चापरविदेहे जगतीप्रत्यासन्नदेशे, जम्बूद्वीपापरविदेहे हि निम्नीभवत् क्षेत्रमन्तिमे विजयद्वारस्य देशे अधोलोकदेशमधिगतमिति, द्वीपान्तरसूर्यास्तूर्द्ध्वं शतमधोऽष्टशतानि, क्षेत्रस्य समत्वादिति, तथा शुक्रसूत्रे 'नक्ख-

असुरकुमाराणं देवाणं अत्थेगइयाणं वीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं वीसं पलिओवमाइं ठिई प०, पाणते कप्पे देवाणं उक्कोसेणं वीसं सागरोवमाइं ठिई प०, आरणे कप्पे देवाणं जहण्णेणं वीसं सागरोवमाइं ठिई प०, जे देवा सायं विसायं सुविसायं सिद्धत्थं उप्पलं भित्तिलं तिगिच्छं दिसासोवत्थियं पलंबं रुइलं पुप्फं सुपुप्फं पुप्फावत्तं पुप्फपभं पुप्फकंतं पुप्फवण्णं पुप्फलेसं पुप्फज्झयं पुप्फसिंगं पुप्फसिद्धं पुप्फुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं वीसं सागरोवमाइं ठिई प०, ते णं देवा वीसाए अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं वीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे वीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिणिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं २० ॥

अथ विंशतितमस्थाने किञ्चिल्लिख्यते, तत्र स्थितिसूत्रेभ्योऽर्वाक् सप्त सूत्राणि, तत्र समाधानं समाधिः—चेतसः स्वास्थ्यं मोक्षमार्गेऽवस्थानमित्यर्थः न समाधिरसमाधिस्तस्याः स्थानानि—आश्रयभेदाः पर्याया वा असामाधिस्थानानि, तत्र 'दवदवचारि'त्ति यो हि द्रुतं द्रुतं चरति-गच्छति सोऽनुकरणशब्दतो दवदवचारीत्युच्यते, चापीत्युत्तरासमाधिस्थानापेक्षया समुच्चयार्थः, भवतीति प्रसिद्धं, स च द्रुतं द्रुतं संयमात्मनिरपेक्षो व्रजन्नात्मानं प्रपतनादिभिरसमाधौ योजयति अन्यांश्च सत्त्वान् घ्नन्नसमाधौ योजयति, सत्त्ववधजनितेन च कर्मणा परलोकेऽप्यात्मानमसमाधौ योजयति, अतो द्रुतगन्तृत्वमसमाधिकारणत्वादसमाधिस्थानम्, एवमन्यत्रापि यथायोगमवसेयं १, तथा अप्रमार्जि-

रितायामासनादि करोति स सरजस्कपाणिपाद इति १४, तथा अकालस्वाध्यायादिकारकः प्रतीतः १५, तथा 'कलहकरः' कलहहेतुभूतकर्तव्यकारी १६, तथा 'शब्दकरः' रात्रौ महता शब्देनोल्लापस्वाध्यायादिकारको गृहस्थभापाभापको वा १७, तथा 'झञ्झाकरो' येन येन गणस्य भेदो भवति तत्तत्करो, येन वा गणस्य मनोदुःखं समुत्पद्यते तद्भापी १८, तथा 'सूरप्रमाणभोजी' सूर्योदयादस्तमयं यावदशनपानाद्यभ्यवहारी १९, एपणाअसमितश्चापि भवति–अनेषणां न परिहरति, प्रेरितश्चासौ साधुभिः कलहायते, तथाऽनेषणीयमपरिहरन् जीवोपरोधे वर्त्तते, एवं चात्मपरयोरसमाधिकरणादसमाधिस्थानमिदं विंशतितममिति २० । तथा घनोदधयः–सप्तपृथिवीप्रतिष्ठानभूताः, सामानिकाः–इन्द्रसमानर्द्धयः साहस्यः–सहस्राणि, वन्धतो–वन्धसमयादारभ्य वन्धस्थितिः स्थितिवन्ध इत्यर्थः, प्रत्याख्याननामकं पूर्वं नवमं, सातादीनि चैकविंशतिर्विमाननामानीति ॥ २० ॥

एक्कवीसं सबला पण्णत्ता, तंजहा–हत्थकम्मं करेमाणे सबले मेहुणं पडिसेवमाणे सबले राइभोअणं भुंजमाणे सबले आहाकम्मं भुंजमाणे सबले सागारियं पिंडं भुंजमाणे सबले उद्देसियं कीयं आहट्टु दिज्जमाणं भुंजमाणे सबले अभिक्खणं पडियाइक्खेत्ता णं भुंजमाणे सबले अंतो छण्हं मासाणं गणाओ गणं संकममाणे सबले अंतो मासस्स तओ दगलेवे करेमाणे सबले अंतो मासस्स तओ माईठाणे सेवमाणे सबले रायपिंडं भुंजमाणे सबले आउट्टिआए पाणाइवायं करेमाणे सबले आउट्टिआए मुसावायं वदमाणे सबले आउट्टिआए अदिण्णादाणं गिण्हमाणे सबले आउट्टिआए अणंतरहिआए पुढवीए ठाणं वा निसीहियं वा

एक्कवीसं सागरोवमाइं ठिई ५०, ते णं देवा एक्कवीसाए अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवा एक्कवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिआ जीवा जे एक्कवीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं २१ ॥

अथैकविंशतितमस्थानकं, तत्र चत्वारि सूत्राणि स्थितिसूत्रैर्विना सुगमानि, नवरं शवलं–कर्बुरं चारित्रं यैः क्रियाविशेषैर्भवति ते शवलास्तद्योगात्साधवोऽपि, ते एवं–तत्र हस्तकर्म–वेदविकारविशेषं कुर्वन्नुपलक्षणत्वात्कारयन् वा शवलो भवत्येकः १ एवं मैथुनं प्रतिसेवमानोऽतिक्रमादिभिस्त्रिभिः प्रकारैः २ तथा रात्रिभोजनं दिवागृहीतं दिवाभुक्तमित्यादिभिश्चतुर्भिर्भङ्गकैरतिक्रमादिभिश्च भुञ्जानः ३ तथा आधाकर्म ४ सागारिकः–स्थानदाता तत्पिण्डं ५ औद्देशिकं क्रीतमाहृत्य दीयमानं(च) भुञ्जानः उपलक्षणत्वात्पामिच्चाच्छेद्यानिसृष्टग्रहणमपीह द्रष्टव्यमिति ६, यावत्करणोपात्तपदान्येवमर्थतोऽवगन्तव्यानि, अभीक्ष्णं २ प्रत्याख्यायाशनादि भुञ्जानः ७ अन्तः षण्णां मासानामेकतो गणाद्गणमन्यं सङ्क्रामन् ८ अन्तर्मासस्य त्रीनुदकलेपान् कुर्वन्, उदकलेपश्च नाभिप्रमाणजलावगाहनमिति, ९, अन्तर्मासस्य त्रीणि मायास्थानानि, स्थानमिति–भेदः १०, राजपिण्डं भुञ्जानः ११, आकुट्टया प्राणातिपातं कुर्वन्, उपेत्य पृथिव्यादिकं हिंसन्नित्यर्थः १२, आकुट्टया मृषावादं वदन् १३, अदत्तादानं गृह्णन् १४, आकुट्टयैवानन्तर्हितायां पृथिव्यां स्थानं वा नैषेधिकं वा चेतयन् कायोत्सर्गं स्वाध्यायभूमिं वा कुर्वन्नित्यर्थः १५ एवमाकुट्टया

वण्णपरिणामे नीलवण्णपरिणामे लोहियवण्णपरिणामे हालिद्दवण्णपरिणामे सुक्किलवण्णपरिणामे सुब्भिगंधपरिणामे दुब्भिगंधपरिणामे तित्तरसपरिणामे कडुयरसपरिणामे कसायरसपरिणामे अंबिलरसपरिणामे महुररसपरिणामे कक्खडफासपरिणामे मउयफासपरिणामे गुरुफासपरिणामे लहुफासपरिणामे सीतफासपरिणामे उसिणफासपरिणामे णिद्धफासपरिणामे लुक्खफासपरिणामे अगुरुलहुफासपरिणामे गुरुलहुफासपरिणामे, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं बावीसं पलिओवमाइं ठिई प०, छट्ठीए पुढवीए उक्कोसेणं बावीसं सागरोवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं जहण्णेणं बावीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं बावीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं बावीसं पलिओवमाइं ठिई प०, अच्चुते कप्पे देवाणं बावीसं सागरोवमाइं ठिई प०, हेट्ठिमहेट्ठिमगेवेज्जगाणं देवाणं जहण्णेणं बावीस सागरोवमाइं ठिई प०, जे देवा महियं विसूहियं विमलं पभासं वणमालं अच्चुतवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं बावीसं सागरोवमाइं ठिई प०, ते णं देवा णं बावीसाए अद्धमासएणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं बावीस वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे बावीसं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं २२ ॥

द्वाविंशतितमं तु स्थानं प्रसिद्धार्थमेव, नवरं सूत्राणि पट् स्थितेरर्वाक्, तत्र मार्गाच्यवननिर्जरार्थं परिषह्यन्ते इति परीषहाः, 'दिगिंछ'त्ति बुभुक्षा सैव परीषहो दिगिञ्छापरीषह इति, सहनं चास्य मर्यादानुल्लङ्घनेन, एवमन्यत्रापि १, तथा पिपासा—तृट् २ शीतोष्णे प्रतीते ३–४ तथा दंशाश्च मशकाश्च दंशमशका उभयेऽप्येते चतुरिन्द्रिया महत्त्वा-

वा भवन्तीति, तथा 'अच्छिन्नच्छेयणइयाइं' ति इह यो नयः सूत्रमच्छिन्नं छेदेनेच्छति सोऽच्छिन्नछेदनयो यथा 'धम्मो मंगलमुकट्ट'मित्यादिश्लोकोऽर्थतो द्वितीयादिश्लोकमपेक्षमाण इत्येवं यान्यच्छिन्नच्छेदनयवन्ति तान्यछिन्नच्छेदनयिकानि तानि चाऽऽजीविकसूत्रपरिपाट्यां-गोशालकमतप्रतिवद्धसूत्रपद्धत्त्यां तया वा भवन्ति,अक्षररचनाविभागस्थितानप्यर्थतोऽन्योऽन्यं प्रेक्षमाणानि भवन्तीति भावना, तथा 'तिकणइयाइं'ति नयत्रिकाभिप्रायाच्चिन्त्यन्ते यानि तानि नयत्रिकवन्तीति त्रिकनयिकानीत्युच्यन्ते,'त्रैराशिकसूत्रपरिपाट्या' इह त्रैराशिका गोशालकमतानुसारिणोऽभिधीयन्ते, यस्मात्ते सर्वं त्र्यात्मकमिच्छन्ति, तद्यथा–जीवोऽजीवो जीवाजीवश्चेति, तथा लोकोऽलोको लोकालोकश्चेत्यादि, नयचिन्तायामपि ते त्रिविधनयमिच्छन्ति, तद्यथा–द्रव्यास्तिकः पर्यायास्तिकः उभयास्तिकश्चेति, एतदेव नयत्रयमाश्रित्य त्रिकनयिकानीत्युक्तमिति, तथा 'चउक्कनइयाइं'ति नयचतुष्काभिप्रायात्तैश्चिन्त्यन्ते यानि तानि चतुष्कनयिकानि, नयचतुष्कं चैवं-नैगमनयो द्विविधः–सामान्यग्राही विशेषग्राही च, तत्र यः सामान्यग्राही स सङ्ग्रहेऽन्तर्भूतो विशेषग्राही तु व्यवहारे, तदेवं सङ्ग्रहव्यवहारऋजूसूत्राः शब्दादित्रयं चैक एवेति चत्वारो नया इति, 'स्वसमये'त्यादि तथैवेति, तथा पुद्गलानाम्-अण्वादीनां परिणामो–धर्मः पुद्गलपरिणामः, स च वर्णपञ्चकगन्धद्वयरसपञ्चस्पर्शाष्टकभेदाद्विंशतिधा, तथा गुरुलघुरगुरुलघु इति भेदद्वयक्षेपाद् द्वाविंशतिः, तत्र गुरुलघु द्रव्यं यत्तिर्यग्गामि वाय्वादि अगुरुलघुर्यत् स्थिरं सिद्धिक्षेत्रं घण्टाकारव्यवस्थितज्योतिष्कविमानादीति, तथा महितादीनि षड् विमाननामानि ॥ २२ ॥

त्रयोविंशतिस्थानकं सुगममेव, नवरं चत्वारि सूत्राणि अर्वाक् स्थितिसूत्रेभ्यः, तत्र सूत्रकृताङ्गस्य प्रथमे श्रुतस्कन्धे षोडशाध्ययनानि द्वितीये सप्त, तेषां चान्वर्थस्तदधिगमाधिगम्य इति ॥ २३ ॥

चउवीसं देवाहिदेवा प० तं०—उसभअजितसंभवअभिणंदणसुमइपउमप्पहसुपासचंदप्पहसुविधिसीअलसिज्जंसवासुपुज्जविमलअणंतधम्मसंतिकुंथुअरमल्लीमुणिसुव्वयनमिनेमीपासवद्धमाणा, चुल्लहिमवंतसिहरीणं वासहरपव्वयाणं जीवाओ चउव्वीसं चउव्वीसं जोयणसहस्साइं णवबत्तीसे जोयणसए एगं अट्ठत्तीसइभागं जोयणस्स किंचिविसेसाहिआओ आयामेणं प०, चउवीसं देवठाणा सइंदया प०, सेसा अहमिंदा अनिंदा अपुरोहिआ, उत्तरायणगते णं सूरिए चउवीसंगुलिए पोरिसीछायं णिव्वत्तइत्ता णं णिअट्टति, गंगासिंधूओ णं महाणदीओ पवाहे सातिरेगेणं चउवीसं कोसे वित्थारेणं प०, रत्तारत्तवतीओ णं महाणदीओ पवाहे सातिरेगे चउवीसं कोसे वित्थारेणं पन्नत्ता, इमीसे णं रयणप्पभाए पुढवीए अत्थे० चउवीसं पलिओवमाइं० अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं चउवीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं चउवीसं पलिओवमाइं ठिई प०, सोहम्मीसाणे णं देवाणं अत्थेगइयाणं चउवीसं पलिओवमाइं ठिई प०, हेट्ठिमउवरिमगेवेज्जाणं देवाणं जहण्णेणं चउवीसं सागरोवमाइं ठिई प०, जे देवा हेट्ठिममज्झिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं चउवीसं सागरोवमाइं ठिई प०, ते णं देवा चउवीसाए अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा, तेसि णं देवाणं चउवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे चउवीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ २४ ॥

विंशतिक्रोशप्रमाणा गङ्गादिनद्यो विस्तारतोऽभिहिताः ॥ २४ ॥

पुरिमपच्छिमगाणं तित्थगराणं पंचजामस्स पणवीसं भावणाओ पण्णत्ता, तंजहा—ईरिआसमिई मणगुत्ती वयगुत्ती आलोयभायणभोयणं आदाणभडमत्तनिक्खेवणासमिई ५ अणुवीतिभासणया कोहविवेगे लोभविवेगे भयविवेगे हासविवेगे ५ उग्गहअणुण्णवणया उग्गहसीमजाणणया सयमेव उग्गहं अणुगिण्हणया साहम्मियउग्गहं अणुण्णविय परिभुंजणया साहारणभत्तपाणं अणुण्णविय पडिभुंजणया ५ इत्थीपसुपंडगसंसत्तगसयणासणवज्जणया इत्थीकहविवज्जणया इत्थीणं इंदियाणमालोयणवज्जणया पुव्वरयपुव्वकीलिआणं अणणुसरणया पणीताहारविवज्जणया ५ सोइंदियरागोवरई चक्खिदियरागोवरई घाणिंदियरागोवरई जिब्भिदियरागोवरई फासिंदियरागोवरई ५, मल्ली णं अरहा पणवीसं धणु उड्ढं उच्चत्तेणं होत्था, सव्वेवि दीहवेयड्ढपव्वया पणवीसं जोयणाणि उड्ढं उच्चत्तेणं प० पणवीसं पणवीसं गाऊआणि उव्विद्धेणं प०, दोच्चाए णं पुढवीए पणवीसं णिरयावाससयसहस्सा प० [ आयारस्स णं भगवओ सचूलिआयस्स पणवीसं अज्झयणा प० तं०—
सत्थपरिण्णा[1] लोगविजओ[2] सीओसणीअं[3] सम्मत्तं[4]। आवंति[5] धुय[6]विमोह[7] उवहाणसुयं[8] महपरिण्णा[9] ॥ १ ॥ पिंडेसण[10] सिज्जि[11]रिआ[12] भासज्झयणा[13] य वत्थ[14] पाएसा[15]। उग्गहपडिमा[16] सत्तिक्कसत्तया[23] भावण[24] विमुत्ती[25] ॥ २ ॥ निसीहज्झयणं पणवीसइमं । मिच्छादिट्ठिविगलिंदिए णं अपज्जत्तए णं संकिलिट्ठपरिणामे णामस्स कम्मस्स पणवीसं उत्तरपयडीओ णिबंधति—तिरियगतिनामं विगलिंदियजातिनामं ओरालिअसरीरणामं तेअगसरीरणामं कम्मणसरीरनामं हुंडगसंठाणनामं ओरालिअसरीरंगोवंगणामं छेवट्ठसंघयणनामं वण्णनामं गंधणामं रसणाम फासणामं तिरिआणुपुव्विनामं अगुरुलहुनामं उवघायनामं तसनामं बादरणामं अपज्जत्तयणामं

कनपूर्वं भाजने-पात्रे भोजनं-भक्तादेरभ्यवहरणम्, अनालोक्यभाजनभोजने हि प्राणिहिंसा सम्भवतीति, तथा अनुविचिन्त्यभाषणतादिका द्वितीयस्य, तत्र विवेकः-परित्यागः, तथा अवग्रहानुज्ञापनादिकास्तृतीयस्य, तत्रावग्रहानुज्ञापना १ तत्र चानुज्ञाते सीमापरिज्ञानं २ ज्ञातायां च सीमायां स्वयमेव 'उग्गहण' मिति अवग्रहस्यानुग्रहणता पश्चात्स्वीकरणमवस्थानमित्यर्थः ३, साधर्मिकाणां-गीतार्थसमुदायविहारिणां संविग्नानामवग्रहो मासादिकालमानतः पञ्चक्रोशादिक्षेत्ररूपः साधर्मिकावग्रहस्तं तानेवानुज्ञाप्य तस्यैव परिभोजनता-अवस्थानं साधर्मिकाणां क्षेत्रे वसतौ वा तैरनुज्ञाते एव वस्तव्यमिति भावः ४, साधारणं-सामान्यं यद्भक्तादि तदनुज्ञाप्याचार्यादिकं तस्य परिभोजनं चेति ५, तथा स्त्र्यादिसंसक्तशयनादिवर्जनादिकाश्चतुर्थस्य, प्रणीताहारः अतिस्नेहवानिति, तथा श्रोत्रेन्द्रियरागोपरत्यादिकाः पञ्चमस्य, अयमभिप्रायो-यो यत्र सजति तस्य तत्परिग्रह इति, ततश्च शब्दादौ रागं कुर्वता ते परिगृहीता भवन्तीति परिग्रहविरतिर्विराधिता भवति, अन्यथा त्वाराधितेति, वाचनान्तरे आवश्यकानुसारेण दृश्यन्ते । तथा 'मिच्छदिट्ठी'त्यादि, मिथ्यादृष्टिरेव तिर्यग्गत्यादिकाः कर्म्मप्रकृतीर्बध्नाति न सम्यग्दृष्टिः, तासां मिथ्यात्वप्रत्ययत्वादिति मिथ्यादृष्टिग्रहणं, विकलेन्द्रियो-द्वित्रिचतुरिन्द्रियाणामन्यतमः, णमित्यलङ्कारे, पर्याप्तोऽन्या अपि बध्नातीत्यपर्याप्तग्रहणं, अपर्याप्तक एव ह्येता अप्रशस्ताः परिवर्त्तमानिका बध्नाति, सोऽप्येताः सङ्क्लिष्टपरिणामो बध्नातीति सङ्क्लिष्टपरिणाम इत्युक्तम्, अयमपि द्वीन्द्रियाद्यपर्याप्तकप्रायोग्यं बध्नाति, तत्र 'विगलिंदियजाइनामं'ति कदाचित् द्वीन्द्रियजात्या सह पञ्चविंशतिः

तेसि णं देवाणं छव्वीसं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे छव्वीसेहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ २६ ॥

पड्विंशतिस्थानकं व्यक्तमेव, नवरं उद्देशनकाला यत्र श्रुतस्कन्धेऽध्ययने च यावन्त्यध्ययनान्युद्देशका वा तत्र तावन्त एव उद्देशनकाला—उद्देशावसराः श्रुतोपचाररूपा इति, तथा अभव्यानां त्रिपुञ्जीकरणाभावेन सम्यक्त्वमिश्ररूपं प्रकृतिद्वयं सत्तायां न भवतीति पड्विंशतिसत्कर्मांशा भवन्तीति ॥ २६ ॥

सत्तावीसं अणगारगुणा प० तं०—पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं सोइंदियनिग्गहे चक्खिंदियनिग्गहे घाणिंदियनिग्गहे जिब्भिंदियनिग्गहे फासिंदियनिग्गहे कोहविवेगे माणविवेगे मायाविवेगे लोभविवेगे भावसच्चे करणसच्चे जोगसच्चे खमा विरागया मणसमाहरणया वयसमाहरणया कायसमाहरणया णाणसंपण्णया दंसणसंपण्णया चरित्तसंपण्णया वेयणअहियासणया मारणंतियअहियासणया, जंबुद्दीवे दीवे अभिइवज्जेहिं सत्तावीसाए णक्खत्तेहिं संववहारे वट्टति, एगमेगे णं णक्खत्तमासे सत्तावीसाहिं राइंदियाहिं राइंदियग्गेणं प०, सोहम्मीसाणेसु कप्पेसु विमाणपुढवी सत्तावीसं जोयणसयाइं बाहल्लेणं प०, वेयगसम्मत्तबन्धोवरयस्स णं मोहणिज्जस्स कम्मस्स सत्तावीसं उत्तरपगडीओ संतकम्मंसा प०, सावणसुद्धसत्तमीसु णं सूरिए सत्तावीसंगुलियं पोरिसिच्छायं णिव्वत्तइत्ता णं दिवसखेत्तं नियट्टेमाणे रयणिखेत्तं अभिणिवट्टमाणे चारं चरइ, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं सत्तावीसं पलिओवमाइं ठिई प०, अहे-

रोधास्त्रयः २२ ज्ञानादिसम्पन्नतास्तिस्रः २५ वेदनातिसहनता–शीताद्यतिसहनं २६ मारणान्तिकातिसहनता–कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमिति २७, तथा जम्बूद्वीपे न धातकीखण्डादौ अभिजिद्वर्जैः सप्तविंशत्या नक्षत्रैर्व्यवहारः प्रवर्त्तते, अभिजिन्नक्षत्रस्योत्तराषाढचतुर्थपादानुप्रवेशनादिति, तथा मासो नक्षत्रचन्द्राभिवर्द्धितऋत्वादित्यमासभेदात्पञ्चविधोऽन्यत्रोक्तः, तत्र नक्षत्रमासः–चन्द्रस्य नक्षत्रमण्डलभोगकाललक्षणः सप्तविंशतिः रात्रिन्दिवानि–अहोरात्राणि रात्रिन्दिवाग्रेणेति–अहोरात्रपरिमाणापेक्षयेदं परिमाणं नतु सर्वथा, तस्याधिकत्वाद्, आधिक्यं चाहोरात्रसप्तषष्टिभागानामेकविंशत्येति, "विमाणपुढवी"त्ति विमानानां पृथिवी–भूमिका, तथा वेदकसम्यक्त्वबन्धः–क्षायोपशमिकसम्यक्त्वहेतुभूतशुद्धदलिकपुञ्जरूपा दर्शनमोहनीयप्रकृतिस्तस्य 'उव्वरओ'त्ति प्राकृतत्वादुद्वलको–वियोजको जन्तुः तस्य मोहनीयकर्मणोऽष्टाविंशतिविधस्य मध्ये सप्तविंशतिरुत्तरप्रकृतयः सत्कर्मांशाः सत्तायामित्यर्थः, एकस्योद्वलितत्वादिति, तथा श्रावणमासस्य शुद्धसप्तम्यां सूर्यः सप्तविंशत्यङ्गुलिकां हस्तप्रमाणशङ्कोरिति गम्यते पौरुषीं छायां निर्वर्त्य दिवसक्षेत्रं–रविकरप्रकाशमाकाशं निवर्द्धयन्–प्रकाशहान्या हानिं नयन् रजनीक्षेत्रम्–अन्धकाराक्रान्तमाकाशमभिवर्द्धयन्–प्रकाशहान्या वृद्धिं नयन् चारं चरति–व्योममण्डले भ्रमणं करोति, अयमत्र भावार्थः—इह किल स्थूलन्यायमाश्रित्य आषाढ्यां चतुर्विंशत्यङ्गुलप्रमाणा पौरुषीच्छाया भवति, दिनसप्तके सातिरेकं छायाऽङ्गुलं वर्द्धते, ततश्च श्रावणशुद्धसप्तम्यामङ्गुलत्रयं वर्द्धते, सातिरेकैकविंशतितमदिनत्वात्तस्याः, तदेव-

समचउरंससंठाणणामं वेउव्वियसरीरंगोवंगणामं वण्णणामं गंधणामं रसणामं फासनामं देवाणुपुव्विणामं अगुरुलहुनामं उवघायनामं पराघायनामं उस्सासनामं पसत्थविहायोगइणामं तसनामं बायरणामं पज्जत्तनामं पत्तेयसरीरनामं थिराथिराणं सुभासुभाणं आएज्जाणाएज्जाणं दोण्हं अण्णयरं एगं नामं णिबंधइ जसोकित्तिनामं निम्माणनामं, एवं चेव नेरइआवि, णाणत्तं अप्पसत्थविहायोगइणामं हुंडगसंठाणणामं अथिरणामं दुब्भगणामं असुभनामं दुस्सरनामं अणादिज्जणामं अजसोकित्तीणामं निम्माणनामं, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, अहे सत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठावीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु देवाणं अत्थेगइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, उवरिमहेट्ठिमगेवेज्जयाणं देवाणं जहण्णेणं अट्ठावीसं सागरोवमाइं ठिई प०, जे देवा मज्झिमउवरिमगेवेज्जएसु विमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं अट्ठावीसं सागरोवमाइं ठिई प०, ते णं देवा अट्ठावीसाए अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा, तेसि णं देवाणं अट्ठावीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे अट्ठावीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ २८ ॥

अष्टाविंशतिस्थानकमपि व्यक्तं, नवरमिह पञ्च स्थितेः प्राक् सूत्राणि, तत्र आचारः-प्रथमाङ्गं तस्य प्रकल्पः-अध्ययनविशेषो निशीथमित्यपराभिधानं आचारस्य वा-साध्वाचारस्य ज्ञानादिविषयस्य प्रकल्पो-व्यवस्थापनमित्या-

वात्, तथा एतावत्तावदाचरितव्यमित्यपि, तथैव देवगतिसूत्रे स्थिरास्थिरयोः शुभाशुभयोरादेयानादेययोश्च परस्परं विरोधित्वेनैकदा बन्धाभावादन्यदन्यतरद्बध्नातीत्युक्तं, तत्र चैकशब्दग्रहणं भाषामात्र एवावसेयमिति, नारकसूत्रे विंशतिस्ता एव प्रकृतयोऽष्टानां तु स्थाने अष्टावन्या बध्नाति, एतदेवाह–'एवं चेवे'त्यादि, नानात्वं–विशेषः ॥ २८ ॥

एगूणतीसइविहे पावसुयपसंगे णं प० तं०–भोमे उप्पाए सुमिणे अंतरिक्खे अंगे सरे वंजणे लक्खणे, भोमे तिविहे प० तं०–सुत्ते वित्ती वत्तिए, एवं एक्केक्कं तिविहं, विकहाणुजोगे विज्जाणुजोगे मंताणुजोगे जोगाणुजोगे अण्णतित्थियपवत्ताणुजोगे, आसाढे णं मासे एगूणतीसराइंदिआइं राइंदियग्गेणं प०, ( एवं चेव ) भद्दवए णं मासे कत्तिए णं मासे पोसे णं मासे फग्गुणे णं मासे वइसाहे णं मासे, चंददिणे णं एगूणतीसं मुहुत्ते सातिरेगे मुहुत्तग्गेणं प०, जीवे णं पसत्थज्झवसाणजुत्ते भविए सम्मदिट्ठी तित्थकरनामसहिआओ णामस्स णियमा एगूणतीसं उत्तरपगडीओ निबंधित्ता वेमाणिएसु देवेसु देवत्ताए उववज्जइ, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एगूणतीसं पलिओवमाइं ठिई प०, अहे सत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं एगूणतीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एगूणतीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु देवाणं अत्थेगइयाणं एगूणतीसं पलिओवमाइं ठिई प०, उवरिममज्झिमगेवेज्जयाणं देवाणं जहण्णेणं एगूणतीसं सागरोवमाइं ठिई प०, जे देवा उवरिमहेट्ठिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं एगूणतीसं सागरोवमाइं ठिई प०, ते णं देवा एगूणतीसाए अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं एगूणतीसं वाससहस्से-

सकाशाद्यः प्रवृत्तः स्वकीयाचारवस्तुतत्त्वानामनुयोगो–विचारः तत्पुरस्करणार्थः शास्त्रसन्दर्भ इत्यर्थः सोऽन्यतीर्थिकप्रवृत्तानुयोग इति २९। तथाऽऽषाढादय एकान्तरिता षण्मासा एकोनत्रिंशद्रात्रिंदिवा इति-रात्रिंदिवसपरिमाणेन भवन्ति स्थूलन्यायेन, कृष्णे पक्षे प्रत्येकं रात्रिन्दिवस्यैकस्य क्षयाद्, आह च–"आसाढबहुलपक्खे भद्दवए कत्तिए य पोसे य। फग्गुणवइसाहेसु य बोद्धव्वा ओमरत्ताओ" ॥ १ ॥ त्ति [ आषाढकृष्णपक्षे भाद्रपदे कार्त्तिके च पौषे च। फाल्गुने वैशाखे च बोद्धव्या अवमरात्रयः ॥ १ ॥ ] इयमत्र भावना–चन्द्रमासो हि एकोनत्रिंशद्दिनानि दिनस्य च द्विषष्टिभागानां द्वात्रिंशत्, ऋतुमासश्च त्रिंशदेव दिनानि भवन्तीति चन्द्रमासापेक्षया ऋतुमासोऽहोरात्रद्विषष्टिभागानां त्रिंशता साधिको भवति, ततश्च प्रत्यहोरात्रं चन्द्रदिनमेकैकेन द्विषष्टिभागेन हीयते इत्यवसीयते, एवं द्विषष्ट्या चन्द्रदिवसानामेकषष्ट्यहोरात्राणां भवतीत्येवं सातिरेके मासद्वये एकमवमरात्रं भवतीति, विशेषस्त्विह चन्द्रप्रज्ञप्तेरवसेय इति, तथा 'चंददिणे णं' ति चन्द्रदिनं–प्रतिपदादिका तिथिः, तच्चैकोनत्रिंशत् मुहूर्त्ताः सातिरेकमुहूर्त्तपरिमाणेनेति, कथं?, यतः किल चन्द्रमास एकोनत्रिंशद्दिनानि द्वात्रिंशच्च दिनद्विषष्टिभागा भवन्ति, ततश्चन्द्रदिनं चन्द्रमासस्य त्रिंशता गुणनेन मुहूर्त्तराशीकृतस्य त्रिंशता भागहारे एकोनत्रिंशन्मुहूर्त्ता द्वात्रिंशच्च मुहूर्त्तस्य द्विषष्टिभागा लभ्यन्त इति, तथा जीवः प्रशस्ताध्यवसानादिविशेषणो वैमानिकेष्वुत्पत्तुकामो नामकर्मण एकोनत्रिंशदुत्तरप्रकृतीर्बध्नाति, ताश्चेमाः–देवगतिः १ पञ्चेन्द्रियजातिः २ वैक्रियद्वयं ४ तैजसकार्मणशरीरे ६ सम-

अप्पणो अहिए बाले, मायामोसं बहुं भसे। इत्थीविसयगेहीए, महामोहं पकुव्वइ ॥ १४ ॥ १२ ॥ जं निस्सिए उव्वहइ, जससाहिगमेण वा। तस्स लुब्भइ वित्तम्मि, महामोहं पकुव्वइ ॥ १५ ॥ १३ ॥ ईसरेण अदुवा गामेणं, अणिसरे ईसरीकए। तस्स संपयहीणस्स, सिरी अतुलमागया ॥ १६ ॥ ईसादोसेण आविट्ठे, कलुसाविलचेयसे। जे अंतराअं चेएइ, महामोहं पकुव्वइ ॥ १७ ॥ १४ ॥ सप्पी जहा अंडउडं, भत्तारं जो विहिंसइ। सेणावइं पसत्थारं, महामोहं पकुव्वइ ॥ १८ ॥ १५ ॥ जे नायगं च रट्ठस्स, नेयारं निगमस्स वा। सेट्ठिं बहुरवं हंता, महामोहं पकुव्वइ ॥ १९ ॥ १६ ॥ बहुजणस्स णेयारं, दीवं ताणं च पाणिणं। एयारिसं नरं हंता, महामोहं पकुव्वइ ॥ २० ॥ १७ ॥ उवट्ठियं पडिविरयं, संजयं सुतवस्सियं। वुक्कम्म धम्माओ भंसेइ, महामोहं पकुव्वइ ॥ २१ ॥ १८ ॥ तहेवाणंतणाणीणं, जिणाणं वरदंसिणं। तेसिं अवण्णवं बाले, महामोहं पकुव्वइ ॥ २२ ॥ १९ ॥ नेयाइअस्स मग्गस्स, दुट्ठे अवयरई बहुं। तं तिप्पयंतो भावेइ, महामोहं पकुव्वइ ॥ २३ ॥ २० ॥ आयरियउवज्झाएहिं, सुयं विणयं च गाहिए। ते चेव खिंसई बाले, महामोहं पकुव्वइ ॥ २४ ॥ २१ ॥ आयरियउवज्झायाणं, सम्मं नो पडितप्पइ। अप्पडिपूयए थद्धे, महामोहं पकुव्वइ ॥ २५ ॥ २२ ॥ अबहुस्सुए य जे केई, सुएणं पविकत्थई। सज्झा-यवायं वयइ, महामोहं पकुव्वइ ॥ २६ ॥ २३ ॥ अतवस्सीए य जे केई, तवेण पविकत्थइ। सव्वलोयपरे तेणे, महामोहं पकुव्वइ ॥ २७ ॥ २४ ॥ साहारणट्ठा जे केई, गिलाणम्मि उवट्ठिए। पभू ण कुणई किच्चं, मज्झंपि से न कुव्वइ ॥ २८ ॥ सढे नियडीपण्णाणे, कलुसाउलचेयसे। अप्पणो य अबोहीय, महामोहं पकुव्वइ ॥ २९ ॥ २५ ॥ जे कहाहिगरणाइं, संपउंजे पुणो पुणो। सव्वतित्थाण भेयाणं, महामोहं पकुव्वइ ॥ ३० ॥ २६ ॥ जे अ आहम्मिए जोए, संपओजे पुणो पुणो। सहाहेउं

भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं ३० ॥

त्रिंशत्तमं स्थानकं सुगमम्, नवरं स्थितेरर्वागष्टौ सूत्राणि, तत्र मोहनीयं सामान्येनाष्टप्रकारं कर्म विशेषतश्चतुर्थी प्रकृतिः तस्य स्थानानि–निमित्तानि मोहनीयस्थानानि, तथा "जे आवि तसे" इत्यादि श्लोकः, यश्चापि त्रसान् प्राणान्–स्त्र्यादीन् वारिमध्ये विगाह्य–प्रविश्योदकेन शस्त्रभूतेन मारयति, कथं ?, आक्रम्य पादादिना स इति गम्यते मार्यमाणस्य महामोहोत्पादकत्वात्सङ्क्लिष्टचित्तत्वाच्च भवशतदुःखवेदनीयमात्मनो महामोहं प्रकरोति–जनयति १ तदेवंभूतं त्रसमारणेनैकं मोहनीयस्थानमेवं सर्वत्रेति । 'सीसा' श्लोकः, शीर्षावेष्टेन–आर्द्रचर्मादिमयेन यः कश्चिद्वेष्टयति स्त्र्यादित्रसानिति गम्यते अभीक्ष्णं–भृशं तीव्राशुभसमाचारः स इत्यस्य गम्यमानत्वात्स मार्यमाणस्य महामोहोत्पादकत्वेन आत्मनो महामोहं प्रकुरुत इति २, यावत्करणात् केषुचित्सूत्रपुस्तकेषु शेषमोहनीयस्थानाभिधानपराः श्लोकाः सूचिताः, केषुचित् दृश्यन्त एवेति ते व्याख्यायन्ते–पाणिना–हस्तेन संपिधाय–स्थगयित्वा, किं तत् ?–'श्रोतो रन्ध्रं मुखमित्यर्थः तथा आवृत्य–अवरुध्य प्राणिनं ततः अन्तर्नदन्तं–गलमध्ये रवं कुर्वन्तं घुरघुरायमाणमित्यर्थः, मारयति स इति गम्यते, महामोहं प्रकरोतीति तृतीयं ३, 'जाततेजसं' वैश्वानरं 'समारभ्य' प्रज्वाल्य 'वहुं' प्रभूतं 'अवरुध्य' महामण्डपवाटादिषु प्रक्षिप्य 'जनं' लोकं अन्तः–मध्ये धूमेन–वह्निलिङ्गेन अथवा अन्तर्धूमो यस्यासावन्तर्धूमस्तेन जाततेजसा विभक्तिपरिणामात् मारयति योऽसौ महामोहं प्रकरोति चतुर्थं ४, शीर्षे–

क्यानि वा भापते 'अक्षीणझञ्झः' अनुपरतकलहः यः स इति गम्यते, महामोहं प्रकरोतीति नवमं ९। अनायकः-अविद्यमाननायको राजा तस्य नयवान्–नीतिमानमात्यः स तस्यैव राज्ञो 'दारान्' कलत्रं द्वारं वा–अर्थागमस्योपायं ध्वंसयित्वा भोगभोगान् विदारयतीति सम्बन्धः, किं कृत्वा ?–'विपुलं' प्रचुरमित्यर्थः, 'विक्षोभ्य' सामन्तादिपरिकरभेदेन संक्षोभ्य नायकं तस्य क्षोभं जनयित्वेत्यर्थः, 'कृत्वा' विधाय णमित्यलङ्कारे प्रतिबाह्यं–अनधिकारिणं दारेभ्योऽर्थागमद्वारेभ्यो वा, दारान् राज्यं वा स्वयमधिष्ठायेत्यर्थः १०। तथा 'उपकसन्तमपि' समीपमागच्छन्तमपि, सर्वस्वापहारे कृते प्राभृतेनानुलोमैः करुणैश्च वचनैरनुकूलयितुमुपस्थितमित्यर्थः, झम्पयित्वा–अनिष्टवचनावकाशं कृत्वा प्रतिलोमाभिः-तस्य प्रतिकूलाभिर्वाग्भिः–वचनैरेतादृशस्तादृशस्त्वमित्यादिभिरित्यर्थः, 'भोगभोगान्' विशिष्टान् शब्दादीन् विदारयति योऽसौ महामोहं प्रकरोतीति दशमं १०। अकुमारभूतः अकुमारब्रह्मचारी सन् यः कश्चित् कुमारभूतोऽहं कुमारब्रह्मचारी अहमिति वदति, अथ च स्त्रीषु गृद्धो–वशकश्च स्त्रीणामेवायत्त इत्यर्थः, अथवा 'वसति' आस्ते स महामोहं प्रकरोतीत्येकादशं ११। अब्रह्मचारी मैथुनादनिवृत्तो यः कश्चित्तत्काल एवासेव्याब्रह्मचर्यं ब्रह्मचारी साम्प्रतमहमित्यतिधूर्त्ततया परप्रवञ्चनाय वदति, तथा य एवमशोभावहं सतामनादेयं भणन् गर्दभ इव गवां मध्ये विस्वरं न वृषभवन्मनोज्ञं नदति–मुञ्चति नदं–नादं शब्दमित्यर्थः, तथा य एवं भणन्नात्मनोऽहितो–न हितकारी बालो-मूढो मायामृपा बहुशः–अनृतं प्रभूतं भापते, यश्चैवं निन्दितं भापते, कया ?–स्त्रीविपयगृद्ध्या हेतुभूतया स इत्थंभूतो

हेयोपादेयवस्तुस्तोमप्रकाशकत्वात् तं, अत एव त्राणं—आपद्रक्षणं प्राणिनामेतादृशं यादृशा गणधरादयो भवन्ति, 'नवरं' प्रावचनिकादिपुरुषं हत्वा महामोहं प्रकरोतीति सप्तदशं १७। उपस्थितं प्रव्रज्यायां-प्रविव्रजिषुमित्यर्थः, 'प्रतिविरतं' सावद्ययोगेभ्यो निवृत्तं प्रव्रजितमेवेत्यर्थः 'संयतं' साधुं 'सुतपस्विनं' तपांसि कृतवन्तं शोभनं वा तपः श्रितं—आश्रितं क्वचित् 'जे भिक्खुं जगजीवणं'ति पाठः, तत्र जगन्ति—जंगमानि अहिंसकत्वेन जीवयतीति जगज्जीवनस्तं विविधैः प्रकारैरुपक्रम्याक्रम्य व्यपक्रम्य बलादित्यर्थः, धर्मात्—श्रुतचारित्रलक्षणाद्भ्रंशयति यः स महामोहं प्रकरोतीति अष्टादशं १८। यथैव प्राक्तनं मोहनीयस्थानं तथैवेदमपि, अनन्तज्ञानिनां ज्ञानस्यानन्तविषयत्वेन अक्षयित्वेन वा जिनानां अर्हतां वरदर्शिनां क्षायिकदर्शनत्वात् तेषां ये ज्ञानाद्यनेकातिशयसम्पदुपेतत्वेन भुवनत्रये प्रसिद्धाः 'अवर्णः' अवर्णवादो वक्तव्यत्वेन यस्यास्ति सोऽवर्णवान्, यथा नास्ति कश्चित् सर्वज्ञो, ज्ञेयस्यानन्तत्वात्, उक्तं च—"अज्जवि धावइ नाणं अज्जवि य अणंतओ अलोगोवि। अज्जवि न कोइ विउहं पावन्ति सव्वन्नुयं जीवो ॥१॥ अह पावति तो संतो होइ अलोओ न चेयमिट्ठंति" त्ति [ अद्यापि धावति ज्ञानं अद्याप्यनन्तोऽलोकोऽपि। अद्यापि न कोऽपि व्यूहं प्राप्नोति सर्वज्ञतां जीवः ॥ १ ॥ अथ प्राप्नोति तदा सान्तोऽलोको भवेत् न चेदमिष्टमिति ] अदूषणं चैतद्, उत्पत्तिसमय एव केवलज्ञानं युगपल्लोकालोकौ प्रकाशयदुपजायते, यथाऽपवरकान्तर्वर्त्तिदीपकलिका अपवरकमध्यप्रकाशस्वरूपेत्यभ्युपगमादिति, बालः—अज्ञो महामोहं प्रकरोतीति एकोनविंशतितमं १९। 'नैया-

स्वतोऽन्यतश्चोपकारं न करोति, कृत्यमुपेक्षते इत्यर्थः, केनाभिप्रायेणेत्याह—ममाप्येष न करोति किंचनापि कृत्यं समर्थोऽपि सन्विद्वेषेण, असमर्थो वाऽयं वालत्वादिना किं कृतेनास्य ?, पुनरुपकर्तुमशक्तत्वादिति लोभेनेति, 'शठः' कैतवयुक्तः शक्तिलोपनात् निकृतिः—माया तद्विषये प्रज्ञानं यस्य स तथा, ग्लानः प्रतिचरणीयो मा भवत्विति ग्लानवेषमहं करोमीति विकल्पवानित्यर्थः, अत एव च कलुषाकुलचेताः आत्मनश्चाबोधिको-भवान्तराप्राप्तव्यजिनधर्मको ग्लानाप्रतिजागरेणाज्ञाविराधनात्, चशब्दात्परेषां चाबोधिकः अविद्यमाना बोधिरस्मादिति व्युत्पादनात्, ये हि तदीयं ग्लानाप्रतिजागरणमुपलभ्य जिनधर्मपराङ्मुखा भवन्ति तेषामबोधिस्तत्कृतेति स एवम्भूतो महामोहं प्रकरोतीति पञ्चविंशतितमं २५। कथा—वाक्यप्रबन्धः शास्त्रमित्यर्थस्तद्रूपाण्यधिकरणानि कथाधिकरणानि—कौटिल्यशास्त्रादीनि प्राण्युपमर्दनप्रवर्त्तकत्वेन तेषामात्मनो दुर्गतावधिकारित्वकरणात्, कथया वा क्षेत्राणि कृषत गामसूयतेत्यादिकया अधिकरणानि तथाविधप्रवृत्तिरूपाणि, अथवा कथा—राजकथादिका अधिकरणानि च-यन्त्रादीनि कलहा वा कथाधिकरणानि तानि सम्प्रयुंक्ते पुनः पुनः एवं 'सर्वतीर्थभेदाय' संसारसागरतरणकारणत्वात् तीर्थानि—ज्ञानादीनि तेषां सर्वथा नाशाय प्रवर्त्तमानः स महामोहं प्रकरोतीति षड्विंशतितमं २६। 'जे य आहम्मिए' कण्ठ्यम्, नवरं अधार्मिकयोगा-निमित्तवशीकरणादिप्रयोगाः किमर्थं?—श्लाघाहेतोः सखिहेतोः—मित्रनिमित्तमित्यर्थः इति सप्तविंशतितमं २७। यश्च मानुष्यकान् भोगान् अथवा पारलौकिकान् 'ते'त्ति विभक्तिपरिणामात्तैस्तेषु

उवभोगंतराए खीणे वीरिअंतराए ३१, मंदरे णं पव्वए धरणितले एक्कतीसं जोयणसहस्साइं छच्चेव तेवीसे जोयणसए किंचिदेसूणा परिक्खेवेणं प०, जया णं सूरिए सव्वबाहिरियं मंडलं उवसंकमित्ता चारं चरइ तया णं इहगयस्स मणुस्सस्स एक्कतीसाए जोयणसहस्सेहिं अट्ठहि अ एक्कतीसेहिं जोयणसएहिं तीसाए सट्ठिभागे जोयणस्स सूरिए चक्खुप्फासं हव्वमागच्छइ, अभिवड्ढिए णं मासे एक्कतीसं सातिरेगाइं राइंदियाइं राइंदियग्गेणं प०, आइच्चे णं मासे एक्कतीसं राइंदियाइं किंचि विसेसूणाइं राइंदियग्गेणं प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एक्कतीसं पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं एक्कतीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एक्कतीस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं एक्कतीसं पलिओवमाइं ठिई प०, विजयवेजयंतजयंतअपराजिआणं देवाणं जहण्णेणं एक्कतीसं पलिओवमाइं ठिई प०, जे देवा उवरिमउवरिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं एक्कतीसं सागरोवमाइं ठिई प०, ते णं देवा एक्कतीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा निस्ससंति वा, तेसि णं देवाणं एक्कतीसं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे एक्कतीसेहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्सति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं ३१ ॥

एकत्रिंशत्तमं स्थानकं सुगमं, नवरं सिद्धानामादौ–सिद्धत्वप्रथमसमय एव गुणाः सिद्धादिगुणाः, ते चाभिनिबोधिकावरणादिक्षयस्वरूपा इति । मन्दरो-मेरुः, स च धरणीतले दशसहस्रविष्कम्भ इतिकृत्वा यथोक्तपरिधिप्रमाणो भवतीति ।

अहोरात्रार्द्धेन न्यूनानीति ॥ ३१ ॥

वत्तीसं जोगसंगहा प०, तंजहा-आलोयण १ निरवलावे २, आवईसु दढधम्मया ३। अणिस्सिओवहाणे ४ य, सिक्खा ५ निप्पडिकम्मया ६ ॥ १ ॥ अण्णायया अलोभे ८ य, तितिक्खा ९ अज्जवे १० सुई ११। सम्मदिट्ठी १२ समाही १३ य, आयारे १४ विणओवए १५ ॥ २ ॥ धिईमई १६ य संवेगे १७, पणिही १८ सुविहि १९ संवरे २०। अत्तदोसोवसंहारे २१, सव्वकामविरत्तया २२ ॥ ३ ॥ पच्चक्खाणे २३-२४ विउस्सग्गे २५, अप्पमादे २६ लवालवे २७। झाणसंवरजोगे २८ य, उदए मारणंतिए २९ ॥ ४ ॥ संगाणं च परिण्णाया ३०, पायच्छित्तकरणेऽवि य ३१। आराहणा य मरणंते ३२, वत्तीसं जोगसंगहा ॥ ५ ॥ वत्तीसं देविंदा प० तं०-चमरे वली धरणे भूआणंदे जाव घोसे महाघोसे चंदे सूरे सक्के ईसाणे सणंकुमारे जाव पाणए अच्चुए, कुंथुस्स णं अरहओ वत्तीसहिया वत्तीसं जिणसया होत्था, सोहम्मे कप्पे वत्तीसं विमाणावाससयसहस्सा णं प०, रेवइणक्खत्ते वत्तीसइतारे प०, वत्तीसतिविहे णट्टे प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं वत्तीसं पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं वत्तीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं वत्तीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु देवाणं अत्थेगइयाणं वत्तीसं पलिओवमाइं ठिई प०, जे देवा विजयवेजयन्तजयन्तअपराजियविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं अत्थेगइयाणं वत्तीसं सागरोवमाइं ठिई प०, ते णं देवा वत्तीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं वत्तीसवाससहस्सेहिं

इत्यर्थः ११ 'सम्मदिट्ठि'त्ति सम्यग्दृष्टिः—सम्यग्दर्शनशुद्धिः १२, 'समाही य'त्ति समाधिश्च—चेतःस्वास्थ्यं १३, 'आयारे विणओवए'त्ति द्वारद्वयं तत्राचारोपगतः स्यात् न मायां कुर्यादित्यर्थः १४, विनयोपगतो भवेत् न मानं कुर्यादित्यर्थः १५ ॥ २ ॥ 'धिइमई य'त्ति धृतिप्रधाना मतिर्धृतिमतिः—अदैन्यं १६ 'संवेगो'त्ति संवेगः—संसाराद्भयं मोक्षाभिलाषो वा १७ 'पणिहि'त्ति प्रणिधिः—मायाशल्यं न कार्यमित्यर्थः १८ 'सुविहि' त्ति 'सुविहि' सदनुष्ठानं १९ संवरश्च—आश्रवनिरोधः २० 'अत्तदोसोवसंहारे'त्ति स्वकीयदोषस्य निरोधः २१ 'सव्वकामविरत्तय'त्ति समस्तविषयवैमुख्यं २२॥३॥ 'पच्चक्खाणे'त्ति प्रत्याख्यानं मूलगुणविषयं २३ उत्तरगुणविषयं च २४ 'विउस्सग्गे'त्ति व्युत्सर्गो द्रव्यभावभेदभिन्नः २५ 'अप्पमाए'त्ति प्रमादवर्जनं २६ 'लवालवे'त्ति कालोपलक्षणं तेन क्षणे क्षणे सामाचार्य्यनुष्ठानं कार्यं २७ 'झाणसंवरजोगे'त्ति ध्यानमेव संवरयोगो ध्यानसंवरयोगः २८ 'उदए मारणंतिए'त्ति मारणान्तिकेऽपि वेदनोदये न क्षोभः कार्यः २९॥४॥ 'संगाणं च परिण्णाय' त्ति सङ्गानां च ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाभेदभिन्ना परिज्ञा कार्या ३० 'पायच्छित्तकरणे' इति प्रायश्चित्तकरणं च कार्यं ३१ 'आराहणा य मरणंते'त्ति आराधना 'मरणान्ते' मरणरूपोऽन्तो मरणान्तस्तत्रेत्येते द्वात्रिंशद्योगसङ्ग्रहा इति ३२ ॥ ५ ॥ इन्द्रसूत्रे यावत्करणात् "वेणुदेवे वेणुदाली हरिकंते हरिस्सहे अग्गिसीहे अग्गिमाणवे पुण्णे वसिट्ठे जलकंते जलप्पहे अमियगई अमियवाहणे वेलंबे पहंजणे" इति दृश्यं, पुनः यावत्करणात् "माहिंदे बंभे लंतए सुक्के सहस्सारे"त्ति द्रष्टव्यं, इह च षोडशानां व्यन्तरेन्द्राणां षोडशा-

विमाणेसु उक्कोसेण तेत्तीसं सागरोवमाइं ठिई प०, जे देवा सव्वट्ठसिद्धे महाविमाणे देवत्ताए उववण्णा तेसि णं देवाणं अजहण्णमणुक्कोसेणं तेत्तीसं सागरोवमाइं ठिई प०, ते णं देवा तेत्तीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा निस्ससंति वा, तेसि णं देवाणं तेत्तीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे तेत्तीसं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं ३३ ॥

अथ त्रयस्त्रिंशत्तमं स्थानकं, तत्र आयः—सम्यग्दर्शनाद्यवाप्तिलक्षणस्तस्य शातनाः—खण्डनं निरुक्तादाशातनाः, तत्र शैक्षः—अल्पपर्यायो रात्निकस्य—बहुपर्यायस्य आसन्नं—आसत्त्या यथा रजोऽञ्चलादिस्तस्य लगति तथा गन्ता भवतीत्येवमाशातना शैक्षस्येत्येवं सर्वत्र, 'पुरओ'त्ति अग्रतो गन्ता भवति, 'सपक्ख'न्ति समानपक्षं—समपार्श्वं यथा भवति समश्रेण्या गच्छतीत्यर्थः, 'ठिच'त्ति स्थाता—आसीनो भवति, यावत्करणाद्दशाश्रुतस्कन्धानुसारेणान्या इह द्रष्टव्याः, ताश्चैवमर्थतः—आसन्नं पुरः पार्श्वतः स्थानेन तिस्रोऽत्र निषीदनेन च तिस्रः तथा विचारभूमौ गतयोः पूर्वतरमाचमतः शैक्षस्याशातना १० एवं पूर्वं गमनागमनमालोचयतः ११ तथा रात्रौ को जागर्त्तीति पृष्टे रात्निकेन तद्वचनमप्रतिशृण्वतः १२ रात्निकस्य पूर्वमालपनीयं कंचन अवमस्य पूर्वतरमालपतः १३ अशनादि लब्धमपरस्य पूर्वमालोचयतः १४ एवमन्यस्योपदर्शयतः १५ एवं निमन्त्रयतः १६ रात्निकमनापृच्छ्यान्यस्मै भक्तादि ददतः १७ स्वयं प्रधानतरं भुञ्जानस्य १८ क्वचित् प्रयोजने व्याहरतो रात्निकस्य वचोऽप्रतिशृण्वतः १९ रात्निकं प्रति तत्समक्षं वा बृहता

मुहूर्त्तस्यैकषष्टिभागाभ्यां दिनवृद्धिर्भवति, तथा च तृतीये मण्डले यदा सूर्यश्चरति तदा द्वादश मुहूर्त्ताश्चत्वारश्चैकषष्टिभागा मुहूर्त्तस्य दिनप्रमाणं भवति, तदर्द्धं चैकषष्टिभागीकृतेनाष्टषष्ट्यधिकशतत्रयलक्षणेन, स्थूलगणितस्य विवक्षितत्वात् परित्यक्तांशाः ३१८२७९। तृतीयमण्डलपरिधौ गुणिते सति एकषष्ट्या च षष्टिगुणितया भागे हृते यल्लभ्यते तत्तृतीयमण्डले चक्षुःस्पर्शप्रमाणं भवति, तच्च द्वात्रिंशत्सहस्राण्येकोत्तराणि ३२००१ अंशानामेकषष्ट्या भागे हृते लब्धाश्चैकोनपञ्चाशत्षष्टिभागा योजनस्य $\frac{६०}{४९}$ त्रयोविंशतिश्चैकषष्टिभागा योजनषष्टिभागस्य $\frac{२३}{६१}$ एतत्तृतीयमण्डले चक्षुःस्पर्शस्य प्रमाणं जम्बूद्वीपप्रज्ञप्त्यामुपलभ्यते, इह तु यदुक्तं त्रयस्त्रिंशत्किञ्चिन्न्यूना, तत्र सातिरेकयोजनस्यापि न्यूनसहस्रता विवक्षितेति सम्भाव्यते, पञ्चदश मण्डले पुनरिदं यथोक्तमेव प्रमाणं भवति, प्रतिमण्डलं योजनस्य चतुरशीत्याः साधिकायाः प्रथममण्डलमाने प्रक्षेपणादिति ॥ ३३ ॥

चोत्तीसं बुद्धाइसेसा प०, तं०—अवट्ठिए केसमंसुरोमनहे १ निरामया निरुवलेवा गायलट्ठी १ गोक्खीरपंडुरे मंससोणिए ३ पउमुप्पलगंधिए उस्सासनिस्सासे ४ पच्छन्ने आहारनीहारे अदिस्से मंसचक्खुणा ५ आगासगयं चक्कं ६ आगासगयं छत्तं ७ आगासगयाओ सेयवरचामराओ ८ आगासफालिआमयं सपायपीढं सीहासणं ९ आगासगओ कुडभीसहस्सपरिमंडिआभिरामो इंदज्झओ पुरओ गच्छइ १० जत्थ जत्थवि य णं अरहंता भगवन्तो चिट्ठंति वा निसीयंति वा तत्थ तत्थवि य णं जक्खा देवा संछन्नपत्तपुप्फपल्लवसमाउलो सच्छत्तो सज्झओ सघंटो सपडागो असोगवरपायवो अभिसंजायइ ११ ईसिं पिट्ठओ मउडठाणंमि तेयमंडलं

अथ 'चतुस्त्रिंशत्तमस्थानके किमपि लिख्यते—'बुद्धाइसेस' त्ति बुद्धानां—तीर्थकृतामतिशेषाः—अतिशया बुद्धातिशेषाः, अवस्थितं—अवृद्धिस्वभावं केशाश्च—शिरोजाः श्मश्रूणि च कूर्चरोमाणि रोमाणि च—शेषशरीरलोमानि नखाश्च प्रतीता इति द्वन्द्वैकत्वमित्येकः १ निरामया—नीरोगा निरुपलेपा—निर्मला गात्रयष्टिः—तनुलतेति द्वितीयः २ गोक्षीरपाण्डुरं मांसशोणितमिति तृतीयः ३ तथा पद्मं च—कमलं [च] गन्धद्रव्यविशेषो वा यत्पद्मकमिति रूढं उत्पलं च—नीलोत्पलमुत्पलकुष्ठं वा गन्धद्रव्यविशेषस्तयोर्यो गन्धः स यत्रास्ति तत्तथोच्छ्वासनिश्वासमिति चतुर्थः ४ प्रच्छन्नमाहारनीहारं—अभ्यवहरणमूत्रपुरीषोत्सर्गौ, प्रच्छन्नत्वमेव स्फुटतरमाह—अदृश्यं मांसचक्षुषा न पुनरवध्यादिलोचनेन पुंसा इति पञ्चमं ५ एतच्च द्वितीयादिकमतिशयचतुष्कं जन्मप्रत्ययं । तथा 'आगासगयं'ति आकाशगतं—व्योमवर्त्ति आकाशगतं (कं) वा—प्रकाशमित्यर्थः, चक्रं—धर्मचक्रमिति षष्ठः ६ एवमाकाशगं छत्रं छत्रत्रयमित्यर्थ इति सप्तमः ७ आकाशके-प्रकाशे श्वेतवरचामरे प्रकीर्णके इत्यष्टमः ८ 'आगासफालिआमय'त्ति आकाशमिव यदत्यन्तमच्छं स्फटिकं तन्मयं सिंहासनं सह पादपीठेन सपादपीठमिति नवमः ९ 'आगासगओ' त्ति आकाशगतोऽत्यर्थं तुङ्ग इत्यर्थः 'कुडभि'त्ति लघुपताकाः संभाव्यन्ते ताभिः परिमण्डितश्चासावभिरामश्च—अभिरमणीय इति विग्रहः 'इंदज्झओ' त्ति शेषध्वजापेक्षयाऽतिमहत्त्वादिन्द्रश्चासौ ध्वजश्च इन्द्रध्वज इति विग्रहः, इन्द्रत्वसूचको ध्वज इति वा 'पुरओ' त्ति जिनस्याग्रतो गच्छतीति दशमः १० 'चिट्ठन्ति वा निसीयन्ति व'त्ति तिष्ठन्ति गतिनिवृत्त्या निषीदन्ति—उपविशन्ति 'तक्ख-

वाह्वाभरणविशेषाः तैरतिवहुत्वेन स्तम्भिताविव स्तम्भितौ भुजौ ययोस्तौ तथा यक्षौ–देवाविति विंशतितमः २०, वृहद्वाचनायामनन्तरोक्तमतिशयद्वयं नाधीयते, अतस्तस्यां पूर्वेऽष्टादशैव, अमनोज्ञानां शब्दादीनामपकर्षः–अभाव इत्येकोनविंशतितमः १९ मनोज्ञानां प्रादुर्भाव इति विंशतितमः २० 'पच्चाहरओ'त्ति प्रत्याहरतो–व्याकुर्वतो भगवतः 'हिययगमणीओ'त्ति हृदयङ्गमः 'जोयणनीहारी'ति योजनातिक्रमी स्वर इत्येकविंशः २१ 'अद्धमागहीए'त्ति प्राकृतादीनां षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा 'रसोर्लशौ मागध्या'मित्यादिलक्षणवती सा असमाश्रितस्वकीयसमग्रलक्षणाऽर्द्धमागधीत्युच्यते, तया धर्ममाख्याति, तस्या एवातिकोमलत्वादिति द्वाविंशः २२ 'भासिज्जमाणी'ति भगवताऽभिधीयमाना 'आरियमणारियाणं'ति आर्यानार्यदेशोत्पन्नानां द्विपदा–मनुष्याश्चतुष्पदा–गवादयः 'मृगा'आटव्याः 'पशवो' ग्राम्याः पक्षिणः प्रतीताः सरीसृपा–उरःपरिसर्प्पा भुजपरिसर्प्पाश्चेति, तेषां किम्?–आत्मन आत्मनः–आत्मीयया आत्मीययेत्यर्थः भाषातया–भाषाभावेन परीणमतीति सम्बन्धः, किम्भूताऽसौ भाषा? इत्याह—हितम्–अभ्युदयः शिवं–मोक्षः सुखं–श्रवणकालोद्भवमानन्दं ददातीति हितशिवसुखदेति त्रयोविंशः २३ 'पुव्वबद्धवेरे'त्ति पूर्वं–भवान्तरेऽनादिकाले वा जातिप्रत्ययं वद्धं-निकाचितं वैरं–अमित्रभावो येषां ते तथा, तेऽपि चासतामन्ये देवा वैमानिका असुरा नागाश्च–भवनपतिविशेषाः सुवर्णाः–शोभनवर्णोपेतत्वाज्ज्योतिष्का यक्षराक्षसकिन्नराः किंपुरुषाः व्यन्तरभेदाः गरुडा-गरुडलाञ्छनत्वात् सुपर्णकुमारा भवनपतिविशेषाः, गन्धर्वा

द्वौ द्वावेवाभिपिच्येते अतो द्वयोर्द्वयोरेव जन्मेति, दक्षिणोत्तरयोस्तु क्षेत्रयोस्तदानीं दिवससद्भावात् न भरतैरावतयोर्जिनोत्पत्तिरर्द्धरात्र एव जिनोत्पत्तेरिति, 'पढमे'त्यादि प्रथमायां पृथिव्यां त्रिंशन्नरकावासानां लक्षाणि, पञ्चम्यां त्रीणि पष्ठ्यां पञ्चोनं लक्षं सप्तम्यां पञ्च नरकाः, एवं सर्वमीलने चतुस्त्रिंशल्लक्षाणि भवन्तीति ॥ ३४ ॥

पणतीसं सच्चवयणाइसेसा प०, कुंथू णं अरहा पणतीसं धणूइं उड्ढं उच्चत्तेणं होत्था, दत्ते णं वासुदेवे पणतीसं धणूइं उड्ढं उच्चत्तेणं होत्था, नंदणे णं बलदेवे पणतीसं धणूइं उड्ढं उच्चत्तेणं होत्था, सोहम्मे कप्पे सुहम्माए सभाए माणवए चेइयक्खंभे हेट्ठा उवरिं च अद्धतेरस अद्धतेरस जोयणाणि वजेत्ता मज्झे पणतीस जोयणेसु वइरामएसु गोलवट्टसमुग्गएसु जिणसकहाओ प०, बितियचउत्थीसु दोसु पुढवीसु पणतीसं निरयावाससयसहस्सा प० ॥ सूत्रं ३५ ॥

पञ्चत्रिंशत्तमस्थानकं सुगमं, नवरं सत्यवचनातिशया आगमे न दृष्टाः, एते तु ग्रन्थान्तरदृष्टाः सम्भाविताः, वचनं हि गुणवद्वक्तव्यं, तद्यथा—संस्कारवत् १ उदात्तं २ उपचारोपेतं ३ गम्भीरशब्दं ४ अनुनादि ५ दक्षिणं ६ उपनीतरागं ७ महार्थं ८ अव्याहतपौर्वापर्यं ९ शिष्टं १० असन्दिग्धं ११ अपहृतान्योत्तरं १२ हृदयग्राहि १३ देशकालाव्यतीतं १४ तत्त्वानुरूपं १५ अप्रकीर्णप्रसृतं १६ अन्योऽन्यप्रगृहीतं १७ अभिजातं १८ अतिस्निग्धमधुरं १९ अपरमर्मविद्धं २० अर्थधर्माभ्यासानपेतं २१ उदारं २२ परनिन्दात्मोत्कर्षविप्रयुक्तं २३ उपगतश्लाघं २४ अनपनीतं २५ उत्पादिताच्छिन्नकौतूहलं २६ अद्भुतं २७ अनतिविलम्बितं २८ विभ्रमविक्षेपकिलिकिञ्चितादिविमुक्तं २९

वस्तत्त्वं २६ अद्भुतत्वं–अनतिविलम्बितत्वं च प्रतीतं २७–२८ विभ्रमविक्षेपकिलिकिञ्चितादिविमुक्तत्वं–विभ्रमो–वक्तृमनसो भ्रान्तता विक्षेपः–तस्यैवाभिधेयार्थं प्रत्यनासक्तता किलिकिञ्चितं–रोषभयाभिलाषादिभावानां युगपद्वा सकृत्करणमादिशब्दान्मनोदोषान्तरपरिग्रहस्तैर्विमुक्तं यत्तत्तथा तद्भावस्तत्त्वं २९ अनेकजातिसंश्रयाद्विचित्रत्वं, इह जातयो वर्णनीयवस्तुरूपवर्णनानि ३० आहितविशेषत्वं-वचनान्तरापेक्षया ढौकितविशेषता ३१ साकारत्वं-विच्छिन्नवर्णपदवाक्यत्वेनाकारप्राप्तत्वं ३२ सत्त्वपरिगृहीतत्वं–साहसोपेतता ३३ अपरिखेदितत्वं–अनायाससम्भवः ३४ अव्युच्छेदित्वं–विवक्षितार्थानां सम्यक्सिद्धिं यावदनवच्छिन्नवचनप्रमेयतेति ३५।] तथा दत्तः–सप्तमवासुदेवः नन्दनः–सप्तमबलदेवः, एतयोश्चावश्यकाभिप्रायेण षड्विंशतिर्धनुषामुच्चत्वं भवति, सुबोधं च तत्, यतोऽरनाथमल्लिस्वामिनोरन्तरे तावभिहितौ, यतोऽवाचि–"अरमल्लिअंतरे दोण्णि केसवा पुरिसपुंडरीअ दत्त"त्ति, अरनाथमल्लिनाथयोश्च क्रमेण त्रिंशत्पञ्चविंशतिश्च धनुषामुच्चत्वं, एतदन्तरालवर्त्तिनोश्च वासुदेवयोः षष्ठसप्तमयोरेकोनत्रिंशत्षड्विंशतिश्च धनुषां युज्यत इति, इहोक्ता तु पञ्चत्रिंशत् स्यात् यदि दत्तनन्दनौ कुन्थुनाथतीर्थकाले भवतो, न चैतदेवं जिनान्तरेष्वधीयत इति दुरवबोधमिदमिति । सौधर्मकल्पे सौधर्मावतंसकादिषु विमानेषु सर्वेषु पञ्च पञ्च सभा भवन्ति–सुधर्मसभा १ उपपातसभा २ अभिषेकसभा ३ अलङ्कारसभा ४ व्यवसायसभा ५, तत्र सुधर्मसभामध्यभागे मणिपीठिकोपरि षष्टियोजनमानो माणवको नाम चैत्यस्तम्भोऽस्ति, तत्र 'वइरामएसु'त्ति वज्रमयेषु तथा गोलवद्वृत्ता

कुंथुस्स णं अरहओ सत्ततीसं गणा सत्ततीसं गणहरा होत्था, हेमवयहेरण्णवयाओ णं जीवाओ सत्ततीसं जोयणसहस्साइं छच्च चउसत्तरे जोयणसए सोलसयएगूणवीसइभाए जोयणस्स किंचिविसेसूणाओ आयामेणं प०, सव्वासु णं विजयवेजयंतजयंत-अपराजियासु रायहाणीसु पागारा सत्ततीसं सत्ततीसं जोयणाइं उड्ढं उच्चत्तेणं प०, खुड्डियाए णं विमाणपविभत्तीए पढमे वग्गे सत्ततीसं उद्देसणकाला प०, कत्तियबहुलसत्तमीए णं सूरिए सत्ततीसंगुलियं पोरिसीछायं निव्वत्तइत्ता णं चारं चरइ ॥ सूत्रं ३७ ॥

सप्तत्रिंशत्स्थानकमपि व्यक्तं, नवरं कुन्थुनाथस्येह सप्तत्रिंशद्गणधरा उक्ताः आवश्यके तु त्रयस्त्रिंशत् श्रूयन्त इति मतान्तरं, तथा हैमवतादिजीवयोरुक्तप्रमाणसंवादगाथा—"सत्ततीस सहस्सा छच्च सया जोयणाण चउसयरा। हेमवयवासजीवा किंचूणा सोलस कला य ॥ १ ॥" त्ति, कला एकोनविंशतिभागो योजनस्येति। तथा विजयादीनि पूर्वादीनि जम्बूद्वीपद्वाराणि तन्नायकास्तन्नामानो देवास्तेषां राजधान्यस्तन्नामिका एव पूर्वादिदिक्षु इतोऽसङ्ख्येय-तमे जम्बूद्वीप इति। क्षुद्रिकायां विमानप्रविभक्तौ कालिकश्रुतविशेषे, तत्र किल बहवो वर्गा-अध्ययनसमुदायात्मका भवन्ति, तत्र प्रथमे वर्गे प्रत्यध्ययनमुद्देशस्य ये कालास्त उद्देशनकाला इति। यदि चैत्रस्य पौर्णमास्यां षट्त्रिंशदङ्गुलिका पौरुषीच्छाया भवति तदा वैशाखस्य कृष्णसप्तम्यामङ्गुलस्य वृद्धिं गतत्वात्सप्तत्रिंशदङ्गुलिका भवतीति ३७

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठतीसं अज्जिआसाहस्सीओ उक्कोसिया अज्जियासंपया होत्था, हेमवयएरण्णवईयाणं जीवाणं धणूपिट्ठे अट्ठतीसं जोयणसहस्साइं सत्त य चत्ताले जोयणसए दस एगूणवीसइभागे जोयणस्स किंचिविसेसूणा परि-

नमिस्स णं अरहओ एगूणचत्तालीसं आहोहियसया होत्था, समयखेत्ते एगूणचत्तालीसं कुलपव्वया प० तं०–तीसं वासहरा पंच मंदरा चत्तारि उसुकारा, दोच्चचउत्थपंचमछट्ठसत्तमासु णं पंचसु पुढवीसु एगूणचत्तालीसं निरयावाससयसहस्सा प०, नाणावरणिज्जस्स मोहणिज्जस्स गोत्तस्स आउयस्स एयासि णं चउण्हं कम्मपगडीणं एगूणचत्तालीसं उत्तरपगडीओ प० ॥ सूत्रं ३९ ॥

एकोनचत्वारिंशत्स्थानकं व्यक्तमेव, नवरं 'आहोहिय'त्ति नियतक्षेत्रविषयावधिज्ञानिनस्तेषां शतानीति, 'कुलपव्वय'त्ति क्षेत्रमर्यादाकारित्वेन कुलकल्पाः पर्वताः कुलपर्वताः, कुलानि हि लोकानां मर्यादानिबन्धनानि भवन्तीतीह तैरुपमा कृता, तत्र वर्षधरास्त्रिंशद् जंबूद्वीपे धातकीखण्डपुष्करार्द्धपूर्वापरार्द्धेषु च प्रत्येकं हिमवदादीनां षण्णां षण्णां भावात् मन्दराः पञ्चेषुकारा धातकीखण्डपुष्करार्द्धयोः पूर्वेतरविभागकारिणश्चत्वारः, एवमेते एकोनचत्वारिंशदिति । 'दोच्चे'त्यादि द्वितीयायां पञ्चविंशतिश्चतुर्थ्यां दश पञ्चम्यां त्रीणि षष्ठ्यां पञ्चोनलक्षं सप्तम्यां पञ्चेति यथोक्ता संख्या नरकाणामिति । 'नाणावरणिज्जे'त्यादि, ज्ञानावरणीयस्य पञ्च मोहनीयस्याष्टाविंशतिः गोत्रस्य द्वे आयुषश्चतस्रः इत्येवमेकोनचत्वारिंशदिति ॥ ३९ ॥

अरहओ णं अरिट्ठनेमिस्स चत्तालीसं अज्जियासाहस्सीओ होत्था, मंदरचूलियाणं चत्तालीसं जोयणाइं उड्ढं उच्चत्तेणं प०, संती अरहा चत्तालीसं धणूइं उड्ढं उच्चत्तेणं होत्था भूयाणंदस्स णं नागकुमारस्स नागरन्नो चत्तालीसं भवणावाससयसहस्सा प०, खुड्डियाए णं विमाणपविभत्तीए तइए वग्गे चत्तालीसं उद्देसणकाला प०, फग्गुणपुण्णिमासिणीए णं सूरिए चत्तालीसंगुलियं पोरि-

कालोए णं समुद्दे बायालीसं चंदा जोइंसु वा जोइंति वा जोइस्संति वा, बायालीसं सूरिया पभासिंसु वा ३, संखे दयसीमे य,
संमुच्छिमभुयपरिसप्पाणं उक्कोसेणं बायालीसं वाससहस्साइं ठिई प०, नामकम्मे बायालीसविहे प०, तं०-गइनामे जाइनामे
सरीरनामे सरीरंगोवंगनामे सरीरबंधणनामे सरीरसंघायणनामे संघयणनामे संठाणनामे वण्णनामे गंधनामे रसनामे फासनामे अ-
गुरुलहुयनामे उवघायनामे पराघायनामे आणुपुव्वीनामे उस्सासनामे आयवनामे उज्जोयनामे विहगगइनामे तसनामे थावरनामे
सुहुमनामे बायरनामे पज्जत्तनामे अपज्जत्तनामे साहारणसरीरनामे पत्तेयसरीरनामे थिरनामे अथिरनामे सुभनामे असुभनामे सुभग-
नामे दुब्भगनामे सुसरनामे दुस्सरनामे आएज्जनामे अणाएज्जनामे जसोकित्तिनामे अजसोकित्तिनामे निम्माणनामे तित्थकरनामे,
लवणे णं समुद्दे बायालीसं नागसाहस्सीओ अब्भितरियं वेलं धारंति, महालियाए णं विमाणपविभत्तीए बितिए वग्गे बायालीसं
उद्देसणकाला प०, एगमेगाए ओसप्पिणीए पंचमछट्ठीओ समाओ बायालीसं वाससहस्साइं कालेणं प०, एगमेगाए उस्सप्पिणीए
पढमबीयाओ समाओ बायालीसं वाससहस्साइं कालेणं प० ॥ सूत्रं ४२ ॥

द्विचत्वारिंशत्स्थानकं व्यक्तमेव, नवरं 'बायालीसं'ति छद्मस्थपर्याये द्वादश वर्षाणि षण्मासा अर्द्धमासश्चेति केव-
लिपर्यायस्तु देशोनानि त्रिंशद्वर्षाणीति पर्युषणाकल्पे द्विचत्वारिंशदेव वर्षाणि महावीरपर्यायोऽभिहितः, इह तु सा-
धिक उक्तः, तत्र पर्युषणाकल्पे यदल्पमधिकं तन्न विवक्षितमिति सम्भाव्यत इति, 'जाव'त्ति करणात् 'बुद्धे मुत्ते अ-
न्तगडे परिनिव्वुडे सव्वदुक्खप्पहीणे'त्ति दृश्यं। 'जम्बूद्वीपस्ये'त्यादि 'पुरच्छिमिल्लाओ चरिमंताओ'त्ति जगतीबाह्यपरि-

तरगमनयुक्तो भवति तद्विहायोगतिनाम, त्रसनामादीन्यष्टौ प्रतीतार्थानि, तथा यतः स्थिराणा दन्ताद्यवयवानां निष्पत्तिर्भवति तत्स्थिरनाम, यतश्च अजिह्वादीनामस्थिराणां निष्पत्तिर्भवति तदस्थिरनाम, तथा शिरःप्रभृतीनां शुभानां तच्छुभनाम, पादादीनामशुभानामशुभनाम इति, शेषाणि प्रतीतानि, नवरं यदुदयाज्जातौ जातौ जीवदेहेषु स्थादिलिङ्गाकारनियमो भवति तत्सूत्रधारसमानं निर्माणनामेति, 'पञ्चमछट्ठीओ समाओ'त्ति दुष्षमा एकान्तदुष्षमा चेत्यर्थः 'पढमबीयाउ'त्ति एकान्तदुष्षमा दुष्षमा चेति ॥ ४२ ॥

तेयालीसं कम्मविवागज्झयणा प०, पढमचउत्थपंचमासु पुढवीसु तेयालीसं निरयावाससयसहस्सा प०, जंबुद्दीवस्स णं दीवस्स पुरच्छिमिल्लाओ चरमंताओ गोथूभस्स णं आवासपव्वयस्स पुरच्छिमिल्ले चरमंते एस णं तेयालीसं जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउद्दिसिंपि दगभागे संखे दयसीमे, महालियाए णं विमाणपविभत्तीए तइये वग्गे तेयालीसं उद्देसणकाला प० ॥ सूत्रं ४३ ॥

त्रिचत्वारिंशत्स्थानकेऽपि किञ्चिल्लिख्यते, 'कम्मविवागज्झयणं'त्ति कर्म्मणः–पुण्यपापात्मकस्य विपाकश्च–फलं तत्प्रतिपादकान्यध्ययनानि कर्मविपाकाध्ययनानि, एतानि च एकादशाङ्गद्वितीयाङ्गयोः संभाव्यन्त इति । 'जंबुद्दीवस्स ण'मित्यादि, जंबूद्वीपस्य पौरस्त्यान्ताद्गोस्तूभपर्वतो द्विचत्वारिंशद्योजनानां सहस्राणि तद्विष्कम्भश्च सहस्रं तदधिकाया द्वाविंशतेरल्पत्वेनाविवक्षणादेवं त्रिचत्वारिंशत्सहस्राणि भवन्तीति, एवं 'चउद्दिसिंपि'त्ति उक्तदिगन्त-

विक्खंभेणं प०, एवं उडुविमाणेवि, ईसिपब्भारा णं पुढवी एवं चेव, धम्मे णं अरहा पणयालीसं धणूइं उड्ढं उच्चत्तेणं होत्था, मंदरस्स णं पव्वयस्स चउदिसिंपि पणयालीसं २ जोयणसहस्साइं अबाहाए अंतरे प०, सव्वेवि णं दिवड्ढखेत्तिया नक्खत्ता पणयालीसं मुहुत्ते चंदेण सद्धिं जोगं जोइंसु वा जोइंति वा जोइस्संति वा–तिन्नेव उत्तराइं पुणव्वसू रोहिणी विसाहा य । एए छ नक्खत्ता पणयालमुहुत्तसंजोगा ॥१॥ महालियाए णं विमाणपविभत्तीए पंचमे वग्गे पणयालीसं उद्देसणकाला प० ॥ (सू०) ४५ ॥

पञ्चचत्वारिंशत्स्थानके त्विदं लिख्यते, 'समयखेत्ते'त्ति कालोपलक्षितं क्षेत्रं मनुष्यक्षेत्रमित्यर्थः, 'सीमंतए णं'ति प्रथमपृथिव्यां प्रथमप्रस्तटे मध्यभागवर्त्ती वृत्तो नरकेन्द्रः सीमन्तक इति । 'उडुविमाणे'त्ति सौधर्मेशानयोः प्रथमप्रस्तटवर्त्ति चतसृणां विमानावलिकानां मध्यभागवर्त्ति वृत्तं विमानकेन्द्रकमुडुविमानमिति, । 'ईसिपब्भार'त्ति सिद्धिपृथिवी 'मंदरस्स णं पव्वयस्से'त्यादि सूत्रे लवणसमुद्राभ्यन्तरपरिध्यपेक्षयान्तरं द्रष्टव्यमिति । 'सव्वेवि ण'मित्यादि, चन्द्रस्य त्रिंशन्मुहूर्त्तभोग्यं नक्षत्रक्षेत्रं समक्षेत्रमुच्यते, तदेव सार्द्धं द्व्यर्द्धं द्वितीयमर्द्धमस्येति द्व्यर्द्धमित्येवं व्युत्पादनात् तथाविधं क्षेत्रं येषामस्ति तानि द्व्यर्द्धक्षेत्रकाणि नक्षत्राणि अत एव पञ्चचत्वारिंशन्मुहूर्त्ताःचन्द्रेण सार्द्धं योगः–सम्बन्धो योजितवन्ति, 'तिन्नेव' गाहा, त्रीण्युत्तराणि उत्तराफाल्गुन्य उत्तराषाढाउत्तराभाद्रपदाश्च ॥ ४५ ॥

दिट्ठिवायस्स णं छायालीसं माउयापया प०, बंभीए णं लिवीए छायालीसं माउयक्खरा प०, पभंजणस्स णं वाउकुमारिंदस्स छायालीसं भवणावाससयसहस्सा प० ॥ सूत्रं ४६ ॥

५२५१।$\frac{३९}{६०}$, यदा चाभ्यन्तरमण्डले सूर्यश्चरति तदाऽष्टादश मुहूर्त्ता दिवसप्रमाणं, तदर्द्धेन नवभिर्मुहूर्त्तैः मुहूर्त्तगतिर्गुण्यते, ततश्च यथोक्तं चक्षुःस्पर्शप्रमाणमागच्छतीति, 'अग्गिभूइ'त्ति वीरनाथस्य द्वितीयो गणधरस्तस्य चेह सप्तचत्वारिंशद्वर्षाण्यगारवास उक्तः, आवश्यके तु षट्चत्वारिंशत्, सप्तचत्वारिंशत्तमवर्षस्यासम्पूर्णत्वादविवक्षा, इह त्वसम्पूर्णस्यापि पूर्णत्वविवक्षेति सम्भावनया न विरोध इति ॥ ४७ ॥

एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स अडयालीसं पट्टणसहस्सा प०, धम्मस्स णं अरहओ अडयालीसं गणा अडयालीसं गणहरा होत्था, सूरमंडले णं अडयालीसं एकसट्ठिभागे जोयणस्स विक्खंभेणं प० ॥ सूत्रं ४८ ॥

अष्टचत्वारिंशत्स्थानके किमपि लिख्यते, 'पट्टण'त्ति विविधदेशपण्यान्यागत्य यत्र पतन्ति तत्पत्तनं—नगरविशेषः, पत्तनं रत्नभूमिरित्याहुरेके, 'धम्मस्स'त्ति पञ्चदशतीर्थङ्करस्य, इहाष्टचत्वारिंशद्गणा गणधराश्चोक्ताः आवश्यके तु त्रिचत्वारिंशत्पठ्यन्ते तदिदं मतान्तरमिति, 'सूरमंडले'त्ति सूर्यविमानं येषां भागानामेकषष्ट्या योजनं भवति तेषामष्टचत्वारिंशत् त्रयोदशभिस्तैर्न्यूनं योजनमित्यर्थः ॥ ४८ ॥

सत्त सत्तमियाए णं भिक्खुपडिमाए एगूणपन्नाए राइंदिएहिं छन्नउइभिक्खासएणं अहासुत्तं जाव आराहिया भवइ, देवकुरुउत्तरकुरु एसु णं मणुया एगूणपन्ना राइंदिएहिं संपन्नजोव्वणा भवंति, तेइंदियाणं उक्कोसेणं एगूणपन्ना राइंदिया ठिई प० ॥ सूत्रं ४९॥

अथैकोनपञ्चाशत्स्थानके लिख्यते, 'सत्तसत्तमियाए णं' सप्त सप्तमानि दिनानि यस्यां सा सप्तसप्तमिका—सप्त सप्त

च सर्वे शतं, एवं देवकुरुषु निषधादीनां महाह्रदानां शतं भवति, सर्वे एव च ते जम्बूद्वीपे द्विशतमाना भवन्ति, ते योजनशतोच्छ्रिताः शतमूलविष्कम्भास्तन्नामकदेवनिवासभूतभवनालङ्कृतशिखरतलाः ॥ ५० ॥

नवण्हं बंभचेराणं एकावन्नं उद्देसणकाला प०, चमरस्स णं असुरिंदस्स असुररन्नो सभा सुधम्मा एकावन्नखंभसयसंनिविट्ठा प०, एवं चेव बलिस्सवि, सुप्पभे णं बलदेवे एकावन्नं वाससयसहस्साइं परमाउं पालइत्ता सिद्धे बुद्धे जाव सव्वदुक्खप्पहीणे, दंसणावरणनामाणं दोण्हं कम्माणं एकावन्नं उत्तरकम्मपगडीओ प० ॥ सूत्रं ५१ ॥

अथैकपञ्चाशत्स्थानकं, तत्र 'बंभचेराणं'ति आचारप्रथमश्रुतस्कन्धाध्ययनानां शस्त्रपरिज्ञादीनां, तत्र प्रथमे सप्तोद्देशका इति सप्तैवोद्देशनकालाः १ एवं द्वितीयादिषु क्रमेण षट् २ चत्वारः ३ चत्वारः ४ एवं षट् ५ पंच ६ अष्टमे चत्वारः ८ सप्तमे महापरिज्ञायाः सप्तोद्देशाः, व्युच्छिन्नं च तदिति प्रान्ते प्रागप्यध्ययनोल्लेखे उद्दिष्टं प्रान्त्य एवात्रोद्दिष्टा उद्देशा अपि तस्य क्रमापेक्षया सप्तमस्य चेत्येवमेकपञ्चाशदिति, 'सुप्पहे'त्ति चतुर्थो बलदेवः अनन्तजिज्जिननाथकालभावी, तस्येहैकपञ्चाशद्वर्षलक्षाण्यायुरुक्तमावश्यके तु पञ्चपञ्चाशदुच्यते तदिदं मतान्तरमिति, 'एकावन्नं उत्तरपगडीओ'त्ति दर्शनावरणस्य नव नाम्नो द्विचत्वारिंशदित्येकपञ्चाशदिति ॥ ५१ ॥

मोहणिज्जस्स णं कम्मस्स बावन्नं नामधेज्जा प०, तं०—कोहे कोवे रोसे दोसे अखमा संजलणे कलहे चंडिक्के भंडणे विवाए १० माणे मदे दप्पे थंभे अत्तुक्कोसे गव्वे परपरिवाए अक्कोसे अवक्कोसे ( परिभवे ) उन्नए २० उन्नामे माया उवही नियडी वलए

त्यश्वरमान्तो येन व्यवधानेन भवतीति गम्यते, 'एस णं'ति एतदन्तरमवाधया व्यवधानलक्षणमित्यर्थः, द्विपञ्चाशद्योजनसहस्राणि भवन्तीत्यक्षरघटना, भावार्थस्त्वयं–इह लवणसमुद्रं पञ्चनवतियोजनसहस्राण्यवगाह्य पूर्वादिषु दिक्षु चत्वारः क्रमेण वडवामुखकेतुकजूपकेश्वराभिधाना महापातालकलशा भवन्ति, तथा जम्बूद्वीपपर्यन्ताद् द्विचत्वारिंशद्योजनसहस्राण्यवगाह्य सहस्रविष्कम्भाश्चत्वार एव वेलन्धरनागराजपर्वता गोस्तुभादयो भवन्ति, ततश्च पञ्चनवत्यास्त्रिचत्वारिंशत्यपकर्षितायां द्विपञ्चाशत्सहस्राण्यन्तरं भवति, तथा सौधर्मे द्वात्रिंशद्विमानानां लक्षाणि सनत्कुमारे द्वादश माहेन्द्रे चाष्टाविति सर्वाणि द्विपञ्चाशत् ॥ ५२ ॥

देवकुरुउत्तरकुरुयाओ णं जीवाओ तेवन्नं २ जोयणसहस्साइं साइरेगाइं आयामेणं प०, महाहिमवंतरुप्पीणं वासहरपव्वयाणं जीवाओ तेवन्नं तेवन्नं जोयणसहस्साइ नव य एगतीसे जोयणसए छच्च एगूणवीसइभाए जोयणस्स आयामेणं प०, समणस्स णं भगवओ महावीरस्स तेवन्नं अणगारा संवच्छरपरियाया पंचसु अणुत्तरेसु महइमहालएसु महाविमाणेसु देवत्ताए उववन्ना, संमुच्छिमउरपरिसप्पाणं उक्कोसेणं तेवन्नं वाससहस्सा ठिई प० ॥ सूत्रं ५३ ॥

त्रिपञ्चाशत्स्थानके लिख्यते, 'महाहिमवंते'त्यादि सूत्रे संवादगाथा 'तेवन्नसहस्साइं नव य सए जोयणाण इगतीसे । जीवा महाहिमवओ अद्धकला छच्च य कलाओ' ॥१॥ त्ति । 'संवच्छरपरियाग'त्ति संवत्सरमेकं यावत् पर्यायः प्रव्रज्यालक्षणो येषां ते संवत्सरपर्यायाः 'महइमहालएसु महाविमणेसु'त्ति महान्ति च तानि–विस्तीर्णानि च अतिमहाल-

पढमबिइयासु दोसु पुढवीसु पणपन्नं निरयावाससयसहस्सा प०, दंसणावरणिज्जनामाउयाणं तिण्हं कम्मपगडीणं पणपन्नं उत्तरपगडीओ प० ॥ सूत्रं ५५ ॥

पञ्चपञ्चाशत्स्थानके त्विदं लिख्यते, 'मन्दरस्से'त्यादि, इह मेरोः पश्चिमान्तात् पूर्वस्य जम्बूद्वीपद्वारस्य पश्चिमान्तः पञ्चपञ्चाशत् सहस्राणि योजनानां भवतीत्युक्तं, तत्र किल मेरोर्विष्कम्भमध्यभागात् पञ्चाशतसहस्राणि द्वीपान्तो भवति, लक्षप्रमाणत्वाद् द्वीपस्य, मेरुविष्कम्भस्य च दशसाहस्रिकत्वाद् द्वीपार्धे पञ्चसहस्रक्षेपेण पञ्चपञ्चाशदेव भवन्तीति, इह च यद्यपि विजयद्वारस्य पश्चिमान्त इत्युक्तं तथापि जगत्याः पूर्वान्त इति किल सम्भाव्यते, मेरुमध्यात् पञ्चाशतो योजनसहस्राणां जगत्या बाह्यान्ते पूर्यमाणत्वात्, जंबूद्वीपजगतीविष्कम्भेन च सह जम्बूद्वीपलक्षं पूरणीयं, लवणसमुद्रजगतीविष्कम्भेन च सह लवणसमुद्रलक्षद्वयमन्यथा द्वीपसमुद्रमानाज्जगतीमानस्य पृथग्गणने मनुष्यक्षेत्रपरिधिरतिरिक्ता स्यात्, सा हि पञ्चचत्वारिंशल्लक्षप्रमाणक्षेत्रापेक्षयाऽभिधीयते, ततश्चैवमतिरिक्ता स्यादिति, अथवेह किञ्चिदूनापि पञ्चपञ्चाशत्पूर्णतया विवक्षितेति, 'अन्तिमरायंसि'त्ति सर्वायुःकालपर्यवसानरात्रौ रात्रेरन्तिमे भागे पापायां मध्यमायां नगर्यां हस्तिपालस्य राज्ञः करणसभायां कार्त्तिकमासामावास्यायां स्वातिनक्षत्रेण चन्द्रमसा युक्तेन नागकरणे प्रत्यूषसि पर्यङ्कासननिषण्णः पञ्चपञ्चाशदध्ययनानि 'कल्लाणफलविवागाइं'ति कल्याणस्य—पुण्यस्य कर्मणः फलं—कार्यं विपाच्यते—व्यक्तीक्रियते यैस्तानि कल्याणफलविपाकानि, एवं पापफलविपाकानि व्याकृत्य—प्रतिपाद्य सिद्धो बुद्धः यावत्करणात् 'मुत्ते अंतकडे परि-

विमुक्त्यभिधानमाचारचूलिका तद्वर्जाना, तत्राचारे प्रथमश्रुतस्कन्धे नवाध्ययनानि द्वितीये षोडश निशीथाध्ययनस्य प्रस्थानान्तरत्वेनेहानाश्रयणात्, षोडशानां मध्ये एकस्याचारचूलिकेति परिहृतत्वात् शेषाणि पञ्चदश, सूत्रकृते द्वितीयाङ्गे प्रथमश्रुतस्कन्धे षोडश द्वितीये सप्त स्थानाङ्गे दशेत्येवं सप्तपञ्चाशदिति, 'गोथूभे'त्यादौ भावार्थोऽयं—द्विचत्वारिंशत्सहस्राणि वेदिकागोस्तुभपर्वतयोरन्तरं सहस्रं गोस्तुभस्य विष्कम्भः द्विपञ्चाशद्गोस्तुभवडवामुखयोरन्तरं दशसहस्रमानत्वाद्वडवामुखविष्कम्भस्य तदर्द्धं पञ्चेति ततो द्विपञ्चाशतः पञ्चानां च मीलने सप्तपञ्चाशदिति, 'जीवाणं धणुपिट्ठ'न्ति मण्डलखण्डाकारं क्षेत्रं, इह सूत्रे संवादगाथार्द्धं—"सत्तावन्न सहस्सा धणुपिट्ठं तेणउय दुसय दस कल"त्ति ५७

पढमदोच्चपंचमासु तिसु पुढवीसु अट्ठावन्नं निरयावाससयसहस्सा प०, नाणावरणिज्जस्स वेयणियआउयनामअंतराइयस्स एएसि णं पंचण्हं कम्मपगडीणं अट्ठावन्नं उत्तरपगडीओ प०, गोथुभस्स णं आवासपव्वयस्स पच्चच्छिमिल्लाओ चरमंताओ वलयामुहस्स महापायालस्स बहुमज्झदेसभाए एस णं अट्ठावन्नं जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउदिसिंपि नेयव्वं ॥ सूत्रं ५८ ॥

अष्टपञ्चाशत्स्थानकेऽपि लिख्यते, 'पढमे'त्यादि तत्र प्रथमायां त्रिंशन्नरकलक्षाणि द्वितीयायां पञ्चविंशतिः पञ्चम्यां त्रीणीति सर्वाण्यष्टपञ्चाशदिति, 'नाणे'त्यादि, तत्र ज्ञानावरणस्य पञ्च वेदनीयस्य द्वे आयुषश्चतस्रो नाम्नो द्विचत्वारिंशत् अन्तरायस्य पञ्चेति सर्वा अष्टपञ्चाशदुत्तरप्रकृतयः 'गोथूभस्से'त्यादि, अस्य च भावार्थः पूर्वोक्तानुसारेणावसेयः, 'एवं चउद्दिसिंपि नेयव्वं'ति अनेन सूत्रत्रयमतिदिष्टं, तच्चैवं—'दओभासस्स णं आवासपव्वयस्स उत्तरिल्लाओ

देवरन्नो सट्ठिं सामाणियसाहस्सीओ प०, सोहम्मीसाणेसु दोसु कप्पेसु सट्ठिं विमाणावाससयसहस्सा प० ॥ सूत्रं ६० ॥

अथ पष्टिस्थानकं, तत्र 'एगमेगे'इत्यादि, चतुरशीत्यधिकशतसंख्यानां सूर्यमण्डलानामेकैकं मण्डलं–तथाविधचारभूमिः सूर्यः पष्ट्या पष्ट्या मुहूर्त्तैः–द्वाभ्यां द्वाभ्यामहोरात्राभ्यामित्यर्थः सङ्घातयति–निष्पादयति, अयमत्र भावार्थः–एकस्मिन्नह्नि यत्र स्थाने उदितः सूर्यस्तत्र स्थाने पुनर्द्वाभ्यामहोरात्राभ्यामुदेतीति 'अग्गोदयं'ति षोडशसहस्रोच्छ्रिताया वेलाया यदुपरि गव्यूतद्वयमानं वृद्धिहानिस्वभावं तदग्रोदकं, 'बलिस्स'त्ति औदीच्यस्य असुरकुमारनिकायराजस्य भवनं, 'बंभस्स'त्ति ब्रह्मलोकाभिधानपञ्चमदेवलोकेन्द्रस्य, 'सट्ठि'त्ति सौधर्मे द्वात्रिंशदीशाने चाष्टाविंशतिर्विमानलक्षाणीतिकृत्वा पष्टिस्तानि भवन्तीति ॥ ६० ॥

पंचसंवच्छरियस्स णं जुगस्स रिउमासेणं मिज्जमाणस्स इगसट्ठिं उऊमासा प०, मंदरस्स णं पव्वयस्स पढमे कंडे एगसट्ठिजोयणसहस्साइं उड्ढं उच्चत्तेणं प०, चंदमंडलेणं एगसट्ठिविभागविभाइए समंसे पं०, एवं सूरस्सवि ॥ सूत्रं ६१ ॥

अथ एकपष्टिस्थानकं, तत्र 'पञ्चे'त्यादि, पञ्चभिः संवत्सरैर्निर्वृत्तमिति पञ्चसांवत्सरिकं तस्य णमित्यलङ्कारे युगस्य कालमानविशेषस्य ऋतुमासेन न चन्द्रादिमासेन मीयमानस्य एकपष्टिः ऋतुमासाः प्रज्ञप्ताः, इह चायं भावार्थः—युगं हि पञ्च संवत्सरा निष्पादयन्ति, तद्यथा–चन्द्रश्चन्द्रोऽभिवर्द्धितः चन्द्रोऽभिवर्धितश्चेति, तत्र एकोनत्रिंशदहोरात्राणि द्वात्रिंशच्च द्विपष्टिभागा अहोरात्रस्येत्येवंप्रमाणेन $२९\frac{३२}{६२}$ कृष्णप्रतिपदमारभ्य पौर्णमासीनिष्ठितेन

होत्था, सुक्कपक्खस्स णं चंदे बासट्ठिं भागे दिवसे दिवसे परिवड्ढइ, ते चेव बहुलपक्खे दिवसे दिवसे परिहायइ, सोहम्मीसाणेसु कप्पेसु पढमे पत्थडे पढमावलियाए एगमेगाए दिसाए बासट्ठिं विमाणा प०, सव्वे वेमाणियाणं बासट्ठि विमाणपत्थडा पत्थडग्गेणं प० ॥ सूत्रं ६२ ॥

अथ द्विषष्टिस्थानकं, 'पञ्चे'त्यादि, तत्र युगे त्रयश्चन्द्रसंवत्सरा भवन्ति तेषु षट्त्रिंशत् पौर्णमास्यो भवन्ति, द्वौ चाभिवर्द्धितसंवत्सरौ भवतः, तत्र चाभिवर्द्धितसंवत्सरस्त्रयोदशभिश्चन्द्रमासैर्भवतीति तयोः षड्विंशतिः पौर्णमास्य इत्येवं द्विषष्टिस्ता भवन्ति इत्येवममावास्या अपीति । वासुपूज्यस्येह द्विषष्टिर्गणा गणधराश्चोक्ता आवश्यके तु षट्षष्टिरुक्तेति मतान्तरमिदमपीति, 'सुक्कपक्खस्से'त्यादि, शुक्लपक्षस्य सम्बन्धी चन्द्रो द्विषष्टिभागान् प्रतिदिनं वर्द्धते, एवं कृष्णपक्षे चन्द्रः परिहीयते, अयं चार्थः सूर्यप्रज्ञप्त्यामप्युक्तः, तथाहि—"किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहियं । चउरंगुलमप्पत्तं हेट्ठा चंदस्स तं चरइ ॥ १ ॥ बावट्ठिं बावट्ठिं दिवसे २ य सुक्कपक्खस्स । जं परिवड्ढइ चंदो खवेइ तं चेव कालेण ॥ २ ॥ पन्नरसयभागेण य चंदं पन्नरसमेव तं चरइ । पण्णरसयभागेण य पुणोवि तं चेववक्कमइ ॥ ३ ॥ एवं वड्ढइ चंदो परिहाणी एव होइ चंदस्स । कालो वा जोण्हा वा एयणुभावेण चंदस्स ॥ ४ ॥ [ कृष्णं राहुविमानं नित्यं चन्द्रेण भवत्यविरहितं । चतुरङ्गुलमप्राप्तमधस्ताच्चन्द्रस्य तच्चरति ॥ १ ॥ द्वाषष्टिं २ दिवसे २ च शुक्लपक्षस्य । परिवर्धते चन्द्रः क्षपयति तावदेव कृष्णेन ॥ २ ॥ पञ्चदशभागेन च चन्द्रं पञ्चदशमेव तत्

माच्छादनीयमेकैकेनेति भाग एक आच्छाद्य इति द्विपष्टिभागीकरणं ] 'सोहम्मी'त्यादि, तत्र सौधर्मेशानयोस्त्रयोदश विमानप्रस्तटा भवन्ति, सनत्कुमारमाहेन्द्रयोर्द्वादश ब्रह्मलोके पट् लान्तके पञ्च शुक्रे चत्वार एवं सहस्रारे आनतप्राणतयोश्चत्वार एवमारणाच्युतयोः ग्रैवेयकेष्वधस्तनमध्यमोपरिमेपु त्रयः २ अनुत्तरेष्वेक इति द्विपष्टिस्ते भवन्ति, एतेपां च मध्यभागे प्रत्येकमुडुविमानादिकाः सर्वार्थसिद्धविमानान्ता वृत्तविमानरूपा द्विपष्टिरेव विमानेन्द्रका भवन्ति, तत्पार्श्वतश्च पूर्वादिपु दिक्षु त्र्यस्रचतुरस्रवृत्तविमानक्रमेण विमानानामावलिका भवन्ति, तदेवं सौधर्मेशानयोः कल्पयोः प्रथमे प्रस्तटे–सर्वाधस्तन इत्यर्थः 'पढमावलियाए'त्ति प्रथमा उत्तरोत्तरावलिकापेक्षया आद्याश्चतस्र आवलिका यस्मिन् स प्रथमावलिकाकस्तत्र, अथवा प्रथमात् मूलभूताद्विमानेन्द्रकादारभ्य याऽसावावलिका–विमानानुपूर्वी तया अथवोत्तरोत्तरावलिकापेक्षया एकैकस्यां दिशि या प्रथमा–आद्यावलिका तस्यां 'पढमावलिय'त्ति पाठान्तरे तु उत्तरोत्तरावलिकापेक्षया एकैकस्यां दिशि या प्रथमावलिका सा द्विपष्टिर्द्विपष्टिर्विमानप्रमाणेन प्रज्ञप्तेति, "एगमेगाए'त्ति उडुविमानाभिधानदेवेन्द्रकापेक्षया एकैकस्यां पूर्वादिकायां दिशि द्विपष्टिर्द्विपष्टिर्विमानानि प्रज्ञप्तानि, द्वितीयादिपु पुनः प्रस्तटेपु एकैकहान्या विमानानि भवन्ति यावद्द्विपष्टितमेऽनुत्तरसुरप्रस्तटे सर्वार्थसिद्धदेवेन्द्रकः पार्श्वे तदेकैकमेव भवतीति, तथा 'सव्वे'त्ति सर्वे वैमानिकानां देवविशेपाणां सम्बन्धिनो द्विषष्टिर्विमानप्रस्तटा-विमानप्रस्तराः प्रस्तटाग्रेण–प्रस्तटपरिमाणेन प्रज्ञप्ता इति ॥ ६२ ॥

सङ्कलनया द्वे शते भिक्षाणामष्टाशीत्यधिके भवतः अत उक्तं—'द्वाभ्यां चे'त्यादि, यावत्करणात् 'अहाकप्पं अहामग्गं फासिया पालिया सोहिया तीरिया किट्टिया सम्मं आणाए आराहियावि भवती'ति दृश्यं, 'सवेवि ण'मित्यादि इतोऽष्टमे नन्दीश्वराख्ये द्वीपे पूर्वादिषु दिक्षु चत्वारोऽञ्जनकपर्वता भवन्ति, तेषां च प्रत्येकं चतसृषु दिक्षु चतस्रः पुष्करिण्यो भवन्ति, तासां च मध्यभागेषु प्रत्येकं दधिमुखपर्वता भवन्ति, ते च षोडश पल्यङ्कसंस्थानसंस्थिताः, यतः सर्वत्र समा विष्कम्भेन, मूलादिषु दशसहस्रविष्कम्भत्वात्तेषां, क्वचित्तु 'विक्खंभुस्सेहेणं'ति पाठस्तत्र तृतीयैकवचनलोपदर्शनाद्विष्कम्भेनेति व्याख्येयं, तथा उत्सेधेनोच्चत्वेन चतुःषष्टिश्चतुःषष्टिरिति, 'सोहम्मी'त्यादि, सौधर्मे द्वात्रिंशदीशानेऽष्टाविंशतिः ब्रह्मलोके च चत्वारि विमानलक्षाणि भवन्तीति सर्वाणि चतुःषष्टिरिति, 'चउसट्ठिलट्ठीए'त्ति चतुःषष्टिर्यष्टीनां—शरीराणां यस्मिन्नसौ चतुःषष्टियष्टिकः 'मुत्तामणिमये'ति मुक्ताश्च—मुक्ताफलानि मणयः—चन्द्रकान्तादिरत्नविशेषाः मुक्तारूपा वा मणयो—रत्नानि मुक्तामणयस्तद्विकारो मुक्तामणिमयः ॥ ६४ ॥

जम्बुद्दीवे णं दीवे पणसट्ठिं सूरमंडला प०, थेरे णं मोरियपुत्ते पणसट्ठिवासाइं अगारमज्झे वसित्ता मुंडे भवित्ता अगाराओ अणगारियं पव्वइए, सोहम्मवडिंसयस्स णं विमाणस्स एगमेगाए बाहाए पणसट्ठिं पणसट्ठिं भोमा प० ॥ सूत्रं ६५ ॥

अथ पञ्चषष्टिस्थानकं, तत्र 'मोरियपुत्ते णं'ति मौर्यपुत्रो भगवतो महावीरस्य सप्तमो गणधरस्तस्य पञ्चषष्टिवर्षाणि गृहस्थपर्यायः, आवश्यकेऽप्येवमेवोक्तो, नवरमेतस्यैव यो बृहत्तरो भ्राता मण्डितपुत्राभिधानः षष्ठो गणधरः तद्दीक्षा-

एवमिदमन्यत्रोच्यते–'दो वारे विजयाइसु गयस्स तिन्निऽच्चुए अहव ताइं । अइरेगं नरभवियं नाणाजीवाण सवद्धा ॥ १ ॥' इति [ द्वे वारे विजयादिषु गतस्य त्रीन् वारान् अथवाऽच्युते तानि । अतिरिक्तं नरभविकं नानाजीवानां सर्वाद्धा ॥ १ ॥ ] ॥ ६६ ॥

पञ्चसंवच्छरियस्स णं जुगस्स नक्खत्तमासेणं मिज्जमाणस्स सत्तसट्ठिं नक्खत्तमासा प०, हेमवयएरन्नवयाओ णं बाहाओ सत्तट्ठिं सत्तट्ठिं जोयणसयाइं पणपन्नाइं तिण्णि य भागा जोयणस्स आयामेणं प०, मंदरस्स णं पव्वयस्स पुरच्छिमिल्लाओ चरमंताओ गोयमदीवस्स पुरच्छिमिल्ले चरमंते एस णं सत्तसट्ठिं जोयणसहस्साइं अबाहाए अंतरे प०, सव्वेसिंपि णं नक्खत्ताणं सीमाविक्खंभेणं सत्तट्ठिं भागं भइए समंसे प० ॥ सूत्रं ६७ ॥

अथ सप्तषष्टिस्थानके किञ्चिद्विव्रियते, तत्र 'पञ्चसंवच्छरी'त्यादि, नक्षत्रमासो येन कालेन चन्द्रो नक्षत्रमण्डलं भुङ्क्ते, स च सप्तविंशतिरहोरात्राणि एकविंशतिश्चाहोरात्रस्य सप्तषष्टिभागाः २७$\frac{२१}{६७}$, युगप्रमाणं चाष्टादश शतानि त्रिंशदधिकानीति प्राक् दर्शितम् १८३०, तदेवं नक्षत्रमासस्योक्तप्रमाणराशिना दिनसप्तषष्टिभागतया व्यवस्थापितेन त्रिंशदुत्तराष्टादशशतप्रमाणेन युगदिनप्रमाणराशिः सप्तषष्टिभागतया व्यवस्थापित एकं लक्षं द्वाविंशतिः सहस्राणि षट् शतानि दश चेत्येवंरूपो विभज्यमानः सप्तषष्टिनक्षत्रमासप्रमाणो भवतीति, 'बाहाओ'त्ति लघुहिमवज्जीवायाः पूर्वापरभागतो ये प्रवर्द्धमानक्षेत्रप्रदेशपङ्क्ती हैमवतवर्षजीवां यावत्ते हैमवतबाहू उच्येते एवमैरण्यवतबाहू अपि भावनीये,

च नव मुहूर्त्ताः ससविंशतिश्च ससपष्टिभागाः ९।$\frac{२७}{६७}$, आह च—"अभिइस्स चंदजोगो सत्तट्ठिं खण्डिए अहोरत्ते । भागाओ एक्कवीसं स होंति अहिगा नव मुहुत्ता ॥ १ ॥" इति, [ अभिजिति चन्द्रयोगः ससपष्ट्या खण्डितेऽहोरात्रे । भागास्त्वेकविंशतिः स भवन्ति नवमुहूर्त्ताधिकाः ॥ १ ॥ ] क्षेत्रतः कालतस्तथा शतभिषग्भरण्यार्द्राश्लेषास्वातिज्येष्ठानां त्रयस्त्रिंशत्ससपष्टिभागास्तद्भागार्द्धं च क्षेत्रसीमाविष्कम्भो भवति, तस्यामेव सार्द्धत्रयस्त्रिंशति त्रिंशता गुणितायां १००५ ससपष्ट्या हृतभागायां यल्लब्धं तदेषां कालसीमा, तच्च पञ्चदश मुहूर्त्ताः, आह च—"सयभिसया भरणीओ अद्दा अस्सेस साइ जेट्ठा य । एए छण्णक्खत्ता पन्नरसमुहुत्तसंजोगा ॥ १ ॥" इति [ शतभिषक् भरणी आर्द्रा अश्लेषा स्वातिर्ज्येष्ठा च । एतानि षड् नक्षत्राणि पञ्चदशमुहूर्त्तसंयोगानि ॥१॥ ] तथोत्तरात्रयः पुनर्वसुरोहिणीविशाखानां ससपष्टिभागानां शतं तद्भागार्द्धं च क्षेत्रसीमाविष्कम्भः भवति, तथा तस्मिन्नेव त्रिंशद्गुणिते ३०१५ तथैव हृतभागे यल्लब्धं तदेषां कालसीमा भवति, सा च पञ्चचत्वारिंशन्मुहूर्त्ता इति, आह च—"तिन्नेव उत्तराइं पुणव्वसूरोहिणी विसाहा य । एए छन्नक्खत्ता, पणयालमुहुत्तसंजोगा ॥१॥" इति [ तिस्र एवोत्तराः पुनर्वसू रोहिणी विशाखा च । एतानि षड् नक्षत्राणि पञ्चचत्वारिंशन्मुहूर्त्तानि ॥ १ ॥ ] शेषाणां पञ्चदशानां नक्षत्राणां ससपष्टिरेव ससपष्टिभागानां क्षेत्रसीमाविष्कम्भो भवति, तस्यां च तथैव गुणितायां २०१० हृतभागायां च यल्लब्धं तत्कालसीमा, तच त्रिंशन्मुहूर्त्ताः, आह च—"अवसेसा नक्खत्ता पन्नरसवि हुंति तीसइमुहुत्ता । चंदस्स तेहिं जोगो समा-

अवज्ञाणं सत्तण्हं कम्मपगडीणं एगूणसत्तरिं उत्तरपगडीओ प० ॥ सूत्रं ६९ ॥

अथैकोनसप्ततिस्थानके किञ्चिल्लिख्यते–'समये'त्यादि, मंदरवर्ज्जा–मेरुवर्जाः वर्षाणि च–भरतादिक्षेत्राणि वर्षधरपर्वताश्च–हिमवदादयस्तत्सीमाकारिणो वर्षधरपर्वताः समुदिता एकोनसप्ततिः प्रज्ञप्ताः, कथं ?, पञ्चसु मेरुषु प्रति बद्धानि सप्त सप्त भरतहैमवतादीनि पञ्चत्रिंशद्वर्षाणि तथा प्रतिमेरु षट् षट् हिमवदादयो वर्षधरास्त्रिंशत्तथा चत्वार एवेषुकारा इति सर्वसंख्ययैकोनसप्ततिरिति, 'मंदरस्से'त्यादि, लवणसमुद्रं पश्चिमायां दिशि द्वादश योजनसहस्राण्यवगाह्य द्वादशसहस्रमानः सुस्थिताभिधानस्य लवणसमुद्राधिपतेर्भवनेनालङ्कृतो गौतमद्वीपो नाम द्वीपोऽस्ति, तस्य च पश्चिमान्तो मेरोः पश्चिमान्तादेकोनसप्ततिसहस्राणि भवन्ति, पञ्चचत्वारिंशतो जम्बूद्वीपसम्बन्धिनां द्वादशानामन्तरसम्बन्धिनां द्वादशानामेव द्वीपविष्कम्भसम्बन्धिनां च मीलनादिति। मोहनीयवर्ज्जानां कर्म्मणामेकोनसप्ततिरुत्तरप्रकृतयो भवन्तीति, कथं ?, ज्ञानावरणस्य पञ्च दर्शनावरणस्य नव वेदनीयस्य द्वे आयुषश्चतस्रो नाम्नो द्विचत्वारिंशद्गोत्रस्य द्वे अन्तरायस्य पञ्चेति ॥ ६९ ॥

समणे भगवं महावीरे वासाणं सवीसइराए मासे वइक्कंते सत्तरिएहिं राइंदिएहिं सेसेहिं वासावासं पज्जोसवेइ, पासे णं अरहा पुरिसादाणीए सत्तरिं वासाइं बहुपडिपुन्नाइं सामन्नपरियागं पाउणित्ता सिद्धे बुद्धे जावप्पहीणे, वासुपुज्जे णं अरहा सत्तरिं धणूइं उद्धं उच्चत्तेणं होत्था, मोहणिज्जस्स णं कम्मस्स सत्तरिं सागरोवमकोडाकोडीओ अबाहूणिया कम्मट्ठिई कम्मनिसेगे प०, माहिं-

यावदुत्कृष्टस्थितिकर्मदलिकं तावद्विशेपहीनं निषिञ्चति, तथा चोक्तम्—“मोत्तूण सगमबाहं पढमाए ठिईए बहुतरं दवं। सेसे विसेसहीणं जावुकोसन्ति सवासिं ॥ १ ॥” इति [मुक्त्वा स्वकीयामबाधां प्रथमायां स्थितौ बहुतरं द्रव्यं। शेषायां विशेषहीनं यावदुत्कृष्टां सर्वासां ॥ १ ॥] ‘बाधृ लोडने’ बाधत इति बाधा कर्म्मण उदय इत्यर्थः, न बाधा अबाधा, अन्तरं कर्म्मोदयस्येत्यर्थः, तया ऊनिका अबाधोनिका कर्मस्थितिः कर्म्मनिषेको भवतीत्येवमेके प्राहुः, अन्ये पुनराहुः—अबाधाकालेन—वर्षसहस्रसप्तकलक्षणेनोना कर्म्मस्थितिः—सप्तसहस्राधिकसप्ततिसागरोपमकोटाकोटीलक्षणा, कर्म्मनिषेको भवति, स च कियान्?, उच्यते—‘सत्तरिं सागरोवमकोडाकोडीओ’त्ति ॥ ७० ॥

चउत्थस्स णं चंदसंवच्छरस्स हेमंताणं एक्कसत्तरीए राइंदिएहिं वीइक्कंतेहिं सव्वबाहिराओ मंडलाओ सूरिए आउट्टिं करेइ, वीरियप्पवायस्स णं पुव्वस्स एक्कसत्तरिं पाहुडा प०, अजिते णं अरहा एक्कसत्तरिं पुव्वसयसहस्साइं अगारमज्झे वसित्ता मुंडे भवित्ता जाव पव्वइए, एवं सगरोवि राया चाउरंतचक्कवट्टी एक्कसत्तरिं पुव्व जाव पव्वइएत्ति ॥ सूत्रं ७१ ॥

अथैकसप्ततिस्थानके किञ्चित् लिख्यते—‘चउत्थस्से’त्यादि, इह भावार्थोऽयं—युगे हि पञ्च संवत्सरा भवन्ति, तत्राद्यौ चन्द्रसंवत्सरौ तृतीयोऽभिवर्द्धितसंवत्सरश्चतुर्थश्चन्द्रसंवत्सर एव, तत्र च एकोनत्रिंशता दिनानां द्वात्रिंशता च द्विपष्टिभागैर्दिनस्य चन्द्रमासो भवति, अयं च द्वादशगुणश्चन्द्रसंवत्सरो भवति, त्रयोदशगुणश्चायमेवाभिवर्द्धितो भवति, ततश्चन्द्रचन्द्राभिवर्द्धितलक्षणे संवत्सरत्रये दिनानां सहस्रं द्विनवतिः पद् द्विपष्टिभागा भवन्ति १०९२।$\frac{६}{६२}$,

**कुमारत्वं त्रिपञ्चाशच्चैकपूर्वाङ्गाधिका राज्यमित्येकसप्ततिरिह च पूर्वाङ्गमधिकमल्पत्वान्न विवक्षितमिति ५, सगरो द्वितीयश्चक्रवर्त्ती अजितस्वामिकालीनः ॥ ७१ ॥**

बावत्तरिं सुवन्नकुमारावाससयसहस्सा प०, लवणस्स समुद्दस्स बावत्तरिं नागसाहस्सीओ बाहिरियं वेलं धारंति, समणे भगवं महावीरे बावत्तरिं वासाइं सव्वाउयं पालइत्ता सिद्धे बुद्धे जावप्पहीणे, थेरे णं अयलभाया बावत्तरिं वासाइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, अब्भिंतरपुक्खरद्धे णं बावत्तरिं चंदा पभासिंसु ३ बावत्तरिं सूरिया तविंसु वा ३, एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स बावत्तरिपुरवरसाहस्सीओ प०, बावत्तरि कलाओ प० तं०—लेहं १ गणियं २ रूवं ३ नट्टं ४ गीयं ५ वाइयं ६ सरगयं ७ पुक्खरगयं ८ समतालं ९ जूयं १० जणवायं ११ पोक्खच्चं १२ अट्ठावयं १३ दगमट्टियं १४ अन्नविहीं १५ पाणविहीं १६ वत्थविहीं १७ सयणविहीं १८ अज्जं १९ पहेलियं २० मागहियं २१ गाहं २२ सिलोगं २३ गंधजुत्तिं २४ मधुसित्थं २५ आभरणविहीं २६ तरुणीपडिकम्मं २७ इत्थीलक्खणं २८ पुरिसलक्खणं २९ हयलक्खणं ३० गयलक्खणं ३१ गोणलक्खणं ३२ कुक्कुडलक्खणं ३३ मिंढयलक्खणं ३४ चक्कलक्खणं ३५ छत्तलक्खणं ३६ दंडलक्खणं ३७ असिलक्खणं ३८ मणिलक्खणं ३९ कागणिलक्खणं ४० चम्मलक्खणं ४१ चंदलक्खणं ४२ सूरचरियं ४३ राहुचरियं ४४ गहचरियं ४५ सोभागकरं ४६ दोभागकरं ४७ विज्जागयं ४८ मंतगयं ४९ रहस्सगयं ५० सभासं ५१ चारं ५२ पडिचारं ५३ वूहं ५४ पडिवूहं ५५ खंधावारमाणं ५६ नगरमाणं ५७ वत्थुमाणं ५८ खंधावारनिवेसं ५९ वत्थुनिवेसं ६० नगरनिवेसं ६१

काष्ठदन्तलोहताम्ररजताद्यो अक्षराणामाधारास्तथा लेखनोत्कीर्णनस्यूतव्यूतच्छिन्नभिन्नदग्धसङ्क्रान्तितोऽक्षराणि भवन्तीति, विषयापेक्षयाप्यनेकधा–स्वामिभृत्यपितृपुत्रगुरुशिष्यभार्यापतिशत्रुमित्रादीनां लेखविषयाणामप्यनेकत्वात्तथाविधप्रयोजनभेदाच्च, अक्षरदोषाश्चैते–'अतिकार्श्यमतिस्थौल्यं, वैषम्यं पङ्क्तिवक्रता। अतुल्यानां च सादृश्यमभागोऽवयवेषु च ॥ १ ॥' इति, १ तथा गणितं–सङ्ख्यानं सङ्कलिताद्यनेकभेदं पाटीप्रसिद्धं २ रूप्यं–लेप्यशिलासुवर्णमणिवस्त्रचित्रादिषु रूपनिर्म्माणं ३ नाट्यकला–भरतमार्गच्छलिकं लास्यविधानमित्यादिभेदादष्टधा नाट्यग्रहणात् नृत्यकलापि गृहीता, सा च अभिनयिका अङ्गहारिका व्यायामिका चेति त्रिभेदा, स्वरूपं चात्र भरतशास्त्रादवसेयं ४ तथा गीतकला, सा च निबन्धमार्ग–छलिकमार्ग–भिन्नमार्गभेदात् त्रिधा, तत्र 'सप्त स्वरास्त्रयो ग्रामा, मूर्च्छना एकविंशतिः। ताना एकोनपञ्चाशत्, समासं स्वरमण्डलम् ॥ १ ॥' इयं च विशाखिलशास्त्रादवसेयेति, ५ 'वाइयं'ति वाद्यकला, सा च ततविततशुषिरघनवाद्यानां चतुष्पञ्च(त्र्ये)कप्रकारतया त्रयोदशधा ६ इत्यादिकः कलाविभागो लौकिकशास्त्रेभ्योऽवसेयः, इह च द्विसप्ततिरिति कलासंख्योक्ता, बहुतराणि च सूत्रे तन्नामान्युपलभ्यन्ते, तत्र च कासांचित् कासुचिदन्तर्भावोऽवगन्तव्य इति ॥ ७२ ॥

हरिवासरम्मयवासयाओ णं जीवाओ तेवत्तरिं २ जोयणसहस्साइं नव य एगुत्तरे जोयणसए सत्तरस य एगूणवीसइभागे जोयणस्स अद्धभागं च आयामेणं प०, विजए णं बलदेवे तेवत्तरिं वाससयसहस्साइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे ॥ सूत्रं ७३ ॥

जिह्विकया चतुर्योजनदीर्घया पञ्चाशद्योजनविष्कम्भया 'वइरतले कुण्डे'त्ति निषधपर्वतस्याधोवर्त्तिनि वज्रभूमिके अशीत्यधिकचतुर्योजनशतायामविष्कम्भे दशयोजनावगाहे सीतोदादेवीभवनाध्यासितमस्तकेन तद्वीपेनालङ्कृतमध्यभागे सीतोदाप्रपातह्रदे 'महय'त्ति महाप्रमाणेन यत्पुनः 'दुहओ'त्ति क्वचित् दृश्यते तदपपाठ इति मन्यते 'घडमुहपवत्तिएणं'ति घटमुखेनेव-कलशवदनेनेव प्रवर्त्तितः-प्रेरितो घटमुखप्रवर्त्तितस्तेन मुक्तावलीनां-मुक्ताफलशरीराणां सम्बन्धी हारस्तस्य यत्संस्थानं तेन संस्थितो यस्तेन प्रपातः-पर्वतात्प्रपतज्जलसमूहस्तेन महाशब्देन-महाध्वनिना प्रपतति, एवं सीतापि, नवरं नीलवद्वर्षधराद्दक्षिणाभिमुखी प्रपततीति, 'चउत्थवज्जे'त्यादि तत्र प्रथमायां त्रिंशत् द्वितीयायां पञ्चविंशतिः तृतीयायां पञ्चदश पञ्चम्यां त्रीणि लक्षाणि षष्ठ्यां पञ्चोनं लक्षं सप्तम्यां पञ्चेत्येतानि मीलितानि चतुःसप्ततिर्भवति ॥ ७४ ॥

सुविहिस्स णं पुप्फदंतस्स अरहओ पन्नत्तरि जिणसया होत्था, सीतले णं अरहा पन्नत्तरि पुव्वसहस्साइं अगारवासमज्झे वसित्ता मुंडे भवित्ता जाव पव्वइए, संती णं अरहा पन्नत्तरिवाससहस्साइं अगारवासमज्झे वसित्ता मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ सूत्रं ७५ ॥

अथ पञ्चसप्ततिस्थानके किमपि लिख्यते 'सुविधेः' नवमतीर्थकरस्य नामान्तरतः पुष्पदन्तस्येति, तथा शीतलस्य पञ्चसप्ततिः पूर्वसहस्राणि गृहवासे, कथं ?, पञ्चविंशतिः कुमारत्वे पञ्चाशच्च राज्य इति, तथा शान्तिः पञ्चसप्ततिवर्ष-

लोकस्याधोवर्त्तिनीष्वष्टासु कृष्णराजिष्वष्टौ सारस्वतादयो लोकान्तिकाभिधाना देवनिकाया भवन्ति, तत्र गर्द्दतोयानां तुषितानां च देवानामुभयपरिवारसंख्यामीलनेन सप्तसप्ततिर्देवसहस्राणि परिवारः प्रज्ञप्तानीति, तथैकैको मुहूर्त्तः सप्तसप्ततिर्लवान् लवाग्रेण—लवपरिमाणेन प्रज्ञप्तः, कथं?, उच्यते, 'हट्ठस्स अनवगल्लस्स, निरुवकिट्ठस्स जंतुणो। एगे ऊसासनीसासे, एस पाणुत्ति वुच्चई ॥ १ ॥ सत्त पाणूणि से थोवे, सत्त थोवाणि से लवे । लवाणं सत्तहत्तरिए, एस मुहुत्ते वियाहिए ॥ २ ॥' त्ति, [ हृष्टस्यानवग्लानस्य निरुपक्लिष्टस्य जन्तोः । एक उच्छ्वासनिःश्वास एष प्राण इति उच्यते ॥ १ ॥ सप्त प्राणास्ते स्तोकः सप्त स्तोकास्ते लवः । लवानां सप्तसप्तत्या एष मुहूर्त्तो व्याख्यातः ॥ २ ॥ ] ॥७७॥

सक्कस्स णं देविंदस्स देवरन्नो वेसमणे महाराया अट्ठहत्तरीए सुवन्नकुमारदीवकुमारावाससयसहस्साणं आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महारायत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे विहरइ, थेरे णं अकंपिए अट्ठहत्तरिं वासाइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, उत्तरायणनियट्टे णं सूरिए पढमाओ मंडलाओ एगूणचत्तालीसइमे मंडले अट्ठहत्तरिं एगसट्ठिभाए दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढेत्ता णं चारं चरइ, एवं दक्खिणायणनियट्टेवि ॥ सूत्रं ७८ ॥

अथाष्टसप्ततिस्थानके किञ्चित् लिख्यते, 'सक्कस्से'त्यादि, 'वेसमणे महाराय'त्ति सोमयमवरुणवैश्रमणाभिधानानां लोकपालानां चतुर्थ उत्तरदिक्पालः, स हि वैश्रमणदेवनिकायिकानां सुपर्णकुमारदेवदेवीनां द्वीपकुमारदेवदेवीनां व्यन्तरव्यन्तरीणां चाधिपत्यं करोति, तदाधिपत्याच्च तन्निवासानामप्याधिपत्यमसौ करोतीत्युच्यते, 'अष्टसप्तत्याः सुवर्णकु-

नवनवतियोजनसहस्राणि षट्चत्वारिंशदधिकानि योजनशतान्यन्योऽन्यमन्तरं कृत्वा चरतः, एतच्च जम्बूद्वीपेऽशीत्युत्तरं योजनशतं प्रविश्याभ्यन्तरं मण्डलं भवति एतस्मिंश्च द्विगुणे जंबूद्वीपप्रमाणादपकर्षिते यथोक्तमन्तरं भवतीति, तथा तत्र तयोश्चरतोरुत्कृष्टोऽष्टादशमुहूर्त्तो दिवसो भवति जघन्यका च द्वादशमुहूर्त्ता रात्रिर्भवति, ततोऽभ्यन्तरमण्डलान्निष्क्रम्य प्रथमेऽहोरात्रेऽभ्यन्तरानन्तरं मण्डलमुपसङ्क्रम्य यदा चारं चरतस्तदा नवनवतिर्योजनसहस्राणि षट्चत्वारिंशदधिकानि योजनशतानि पञ्चत्रिंशच्च एकषष्टिभागा योजनस्यान्तरं कृत्वा चारं चरतः, तदा चाष्टादशमुहूर्त्तो दिवसो भवति द्वाभ्यां मुहूर्त्तस्यैकषष्टिभागाभ्यां न्यूनः, द्वादशमुहूर्त्ता च रात्रिर्भवति द्वाभ्यां मुहूर्त्तैकषष्टिभागाभ्यामधिकेति, एवं दक्षिणायनस्य द्वितीयादिषु मण्डलेष्वहोरात्रेषु चान्योऽन्यान्तरप्रमाणस्य पञ्चभिः पञ्चभिर्योजनैः पञ्चत्रिंशता चैकषष्टिभागैर्योजनस्य वृद्धिर्वाच्या, द्वाभ्यां द्वाभ्यां च मुहूर्त्तैकषष्टिभागाभ्यां दिनहानी रात्रिवृद्धिश्चेति, एवं च एकोनचत्वारिंशत्तमे मण्डले सूर्ययोरन्तरं नवनवतिः सहस्राण्यष्टशतानि सप्तपञ्चाशच्च योजनानां त्रयोविंशतिश्चैकषष्टिभागाः, दिनप्रमाणं चाष्टादशानां मुहूर्त्तानां मध्यादेकषष्टिभागानामष्टसप्तत्यां पातितायां षोडश मुहूर्त्ताश्चतुश्चत्वारिंशच्चैकषष्टिभागा मुहूर्त्तस्य, रात्रेस्त्वष्टसप्तत्यां क्षिप्तायां त्रयोदश मुहूर्त्ताः सप्तदशैकषष्टिभागाश्चेति, एवं 'दक्खिणायणनियट्टे'त्ति यथोत्तरायणनिवृत्त एकोनचत्वारिंशत्तमे मण्डले अष्टसप्ततिमेकषष्टिभागान् हापयति वर्द्धयति च, एवं दक्षिणायननिवृत्तोऽपि सूर्यस्तान् हापयति वर्द्धयति च, केवलं दक्षिणायने दिनभागान् हापयति रात्रिभागांश्च

मष्टादशोत्तरं लक्षमुक्तं, यत आह—“पढमासीइ सहस्सा १ वत्तीसा २ अट्ठवीस ३ वीसा य ४। अट्ठार ५ सोल ६ अट्ठ य ७ सहस्स लक्खोवरिं कुज्जा ॥ १ ॥” इति [प्रथमाऽशीतिः सहस्राणि द्वात्रिंशत् अष्टाविंशतिर्विंशतिश्च । अष्टादश षोडशाष्टौ सहस्राणि लक्षस्योपरि कुर्यात् ॥१॥ ] अथवा षष्ठ्याः सहस्राधिकोऽपि मध्यभागो विवक्षितः, एवमर्थसूचकत्वाद्बहुशब्दस्येति, तथा जम्बूद्वीपस्य जगत्याश्चत्वारि द्वाराणि विजयवैजयन्तजयन्तापराजिताभिधानानि चतुश्चतुर्योजनविष्कम्भाणि गव्यूतपृथुलद्वारशाखानि क्रमेण पूर्वादिषु दिक्षु भवन्ति, तेषां च द्वारस्य च द्वारस्य चान्योऽन्यमित्यर्थः, 'एस णं'ति एतदेकोनाशीतियोजनसहस्राणि सातिरेकाणीत्येवंलक्षणमबाधया—व्यवधानेन व्यवधानरूपमित्यर्थान्तरं प्रज्ञप्तं, कथं ?, जम्बूद्वीपपरिधेः ३१६२२७ योजनानि क्रोशाः ३ धनूंषि १२८ अङ्गुलानि १३ सार्द्धानीत्येवंलक्षणस्यापकर्पितद्वारद्वारशाखाविष्कम्भस्य चतुर्विभक्तस्यैवंफलत्वादिति ॥ ७९ ॥

सेज्जंसे णं अरहा असीइं धणूइं उड्ढं उच्चत्तेणं होत्था, तिविट्ठे णं वासुदेवे असीइं धणूइं उड्ढं उच्चत्तेणं होत्था, अयले णं बलदेवे असीइं धणूइं उड्ढं उच्चत्तेणं होत्था, तिविट्ठे णं वासुदेवे असीइवाससयसहस्साइं महाराया होत्था, आउबहुले णं कण्डे असीइजोयणसहस्साइं बाहल्लेणं प०, ईसांणस्स देविंदस्स देवरन्नो असीई सामाणियसाहस्सीओ प०, जम्बुद्दीवे णं दीवे असीउत्तरं जोयणसयं ओगाहेत्ता सूरिए उत्तरकट्ठोवगए पढमं उदयं करेइ ॥ सूत्रं ८० ॥

अथाशीतितमस्थानके किञ्चिल्लिख्यते—श्रेयांसः—एकादशो जिनः, त्रिपृष्ठः श्रेयांसजिनकालभावी प्रथमवासुदेवः,

प्रज्ञप्तानि, इह च शतशब्देनाध्ययनान्युच्यन्ते, तानि कृतयुग्मादिलक्षणराशिविशेपविचाररूपाणि अत्रान्तराध्ययनस्वभावानि तदवगमावगम्यानीति ॥ ८१ ॥

जम्बुद्दीवे दीवे वासीयं मंडलसयं जं सूरिए दुक्खुत्तो संकमित्ता णं चारं चरइ तं०—निक्खममाणे य पविसमाणे य, समणे भगवं महावीरे बासीए राइंदिएहिं वीइक्कंतेहिं गब्भाओ गब्भं साहरिए, महाहिमवतस्स णं वासहरपव्वयस्स उवरिल्लाओ चरमंताओ सोगंधियस्स कंडस्स हेट्ठिल्ले चरमंते एस णं बासीइं जोयणसयाइं अबाहाए अंतरे प०, एवं रुप्पिस्सवि ॥ सूत्रं ८२ ॥

अथ द्व्यशीतिस्थानके किमपि लिख्यते, अत्र जम्बूद्वीपे द्व्यशीत्यधिकं मण्डलशतं—सूर्यस्य मार्गशतं तद्भवतीति वाक्यशेपः, किंभूतं ?—यत् सूर्यो द्विकृत्वो—द्वौ वारौ सङ्क्रम्य—प्रविश्य चारं चरति, तद्यथा—निष्क्रामंश्च जम्बूद्वीपात् प्रविशंश्च जम्बूद्वीप एवेति, अयमत्र भावार्थः—किल चतुरशीत्यधिकं सूर्यमण्डलशतं भवति, तत्र सर्वाभ्यन्तरे सर्वबाह्ये सकृदेव सङ्क्रामति शेपाणि तु द्वौ वाराविति, इह च द्व्यशीतिविवक्षयैवेदं द्व्यशीतिस्थानकेऽधीतमिति भावनीयं, यद्यपि जम्बूद्वीपे पञ्चपष्टिरेव मण्डलानां भवति तथापि जम्बूद्वीपादिकसूर्यचारविपयत्वाच्छेपाण्यपि जम्बूद्वीपेन विशेपितानीति, 'समणे' इत्यादि आपाढस्य शुक्लपक्षपष्ठ्या आरभ्य द्व्यशीत्यां रात्रिन्दिवेष्वतिक्रान्तेषु त्र्यशीतितमे वर्त्तमाने अश्वयुजः कृष्णत्रयोदश्यामित्यर्थः, गर्भात्—गर्भाशयाद्देवानंदाब्राह्मणीकुक्षित इत्यर्थः गर्भं—त्रिशलाभिधानक्षत्रियाकुक्षिं संहृतो—नीतो देवेन्द्रवचनकारिणा हरिणेगमेष्यभिधानदेवेनेति, इदं च सूत्रं द्व्यशीतिरात्रिन्दिवान्यधिकृत्य

त्वेकाशीतिरिति मतान्तरमिदमिति, तथा स्थविरो मण्डितपुत्रो—महावीरस्य षष्ठो गणधरः तस्य च त्र्यशीतिर्वर्षाणि सर्वायुः, कथं ?, त्रिपञ्चाशद्गृहस्थपर्याये चतुर्दश छद्मस्थपर्याये षोडश केवलित्वे इत्येवं त्र्यशीतिरिति, तथा 'कोसलिए'त्ति कोशलदेशे भवः कौशलिकः 'तेसीइं'ति विंशतिः पूर्वलक्षाणि कुमारत्वे त्रिषष्टिः राज्ये इत्येवं त्र्यशीतिः, तथा भरतश्चक्रवर्त्ती सप्तसप्ततिः पूर्वलक्षाणि कुमारत्वे षट् चक्रवर्त्तित्वे इत्येवं त्र्यशीतिमगारवासमध्युष्य जिनो जातः—राज्यावस्थस्यैव रागादिक्षयात्केवली—संपूर्णासहायविशुद्धज्ञानादित्रययोगात् सर्वज्ञो विशेषबोधात् सर्वभावदर्शी सामान्यबोधात्ततः पूर्वलक्षं प्रव्रज्याग्रहणपूर्वकं केवलित्वेन विहृत्य सिद्ध इति ॥ ८३ ॥

चउरासीइ निरयावाससयसहस्सा प०, उसभे णं अरहा कोसलिए चउरासीइं पुव्वसयसहस्साइं सव्वाउयं पालइत्ता सिद्धे बुद्धे जावप्पहीणे, एवं भरहो बाहुबली बंभी सुंदरी, सिज्जंसे णं अरहा चउरासीइं वाससयसहस्साइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, तिविट्ठे णं वासुदेवे चउरासीइं वाससयसहस्साइं सव्वाउयं पालइत्ता अप्पइट्ठाणे नरए नेरइयत्ताए उववन्नो, सक्कस्स णं देविंदस्स देवरन्नो चउरासीई सामाणियसाहस्सीओ प०, सव्वेवि णं बाहिरया मंदरा चउरासीइं २ जोयणसहस्साइं उड्ढं उच्चत्तेणं प०, सव्वेवि णं अंजणगपव्वया चउरासीइं २ जोयणसहस्साइं उड्ढं उच्चत्तेणं पन्नत्ता, हरिवासरम्मयवासियाणं जीवाणं धणुपिट्ठा चउरासीं जोयणसहस्साइं सोलस जोयणाइं चत्तारि य भागा जोयणस्स परिक्खेवेणं प०, पंकबहुलस्स णं कण्डस्स उवरिल्लाओ चरमंताओ हेट्ठिल्ले चरमंते एस णं चोरासीइ जोयणसयसहस्साइं अबाहाए अंतरे प०, विवाहपन्नत्तीए णं भगव-

पदसहस्राणि पदाग्रेण—पदपरिमाणेन, इह च यत्रार्थोपलब्धिस्तत्पदं, मतान्तरेण तु अष्टादशपदसहस्रपरिमाणत्वादाचारस्य एतद्विगुणत्वाच्च शेपाङ्गानां व्याख्याप्रज्ञप्तिर्द्वे लक्षे अष्टाशीतिः सहस्राणि पदानां भवन्तीति, तथा चतुरशीतिर्नागकुमारावासलक्षाणि—चतुश्चत्वारिंशतो दक्षिणायां चत्वारिंशतश्चोत्तरायां भावादिति, चतुरशीतिर्योनयो—जीवोत्पत्तिस्थानानि ता एव प्रमुखानि—द्वाराणि योनिप्रमुखानि तेषां शतसहस्राणि—लक्षाणि योनिप्रमुखशतसहस्राणि प्रज्ञप्तानि, कथं ?—"पुढविदगअगणिमारुय एक्केक्के सत्त जोणिलक्खाओ । वण पत्तेय अणंते दस चउदस जोणिलक्खाओ ॥ १ ॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु । तिरिएसु होंति चउरो चोद्दसलक्खा उ मणुएसु ॥ २ ॥" त्ति, [ पृथ्वीदकाग्निमरुतामेकैकस्मिन् सप्त योनिलक्षाः । वने प्रत्येकानन्तयोर्दश चतुर्दश योनिलक्षाः ॥ १ ॥ विकलेन्द्रियेषु द्वे द्वे चतस्रः चतस्रश्च नारकसुरयोः । तिर्यक्षु भवन्ति चतस्रः चतुर्दश लक्षास्तु मनुजेषु ॥ २ ॥ ] इह च जीवोत्पत्तिस्थानानामसंख्येयत्वेऽपि समानवर्णगन्धरसस्पर्शानां तेषामेकत्वविवक्षणान्न यथोक्तयोनिसंख्याव्यभिचारो मन्तव्य इति, 'पुव्वाइयाण'मित्यादि, पूर्वमादिर्येषां तानि पूर्वादिकानि तेषां शीर्षप्रहेलिका पर्यवसाने येषां तानि शीर्षप्रहेलिकापर्यवसानानि तेषां स्वस्थानात्—पूर्वपूर्वस्थानादुत्तरोत्तरस्य संख्यास्थानस्योत्पत्तिस्थानात् संख्याविशेषलक्षणात् गुणनीयादित्यर्थः 'स्थानान्तराणि' स्थानान्तराण्यपि अनन्तरस्थानान्यव्यवहितसङ्ख्याविशेषा गुणकारनिष्पन्ना येषु तानि स्वस्थानस्थानान्तराणि क्रमव्यवस्थितसङ्ख्यानविशेषा इत्यर्थः अथवा स्वस्थानानि

मक्खायं'ति एतानि विमानान्येवं भवन्ति इति-हेतोराख्यातानि भगवता सर्वज्ञत्वात् सत्यवादित्वाच्चेति ॥ ८४ ॥

आयारस्स णं भगवओ सचूलियागस्स पंचासीइं उद्देसणकाला प०, धायइसण्डस्स णं मंदरा पंचासीइं जोयणसहस्साइं सव्वग्गेणं प०, रुयए णं मंडलियपव्वए पंचासीइं जोयणसहस्साइं सव्वग्गेणं प०, नंदणवणस्स णं हेट्ठिलाओ चरमंताओ सोगंधियस्स कंडस्स हेट्ठिले चरमंते एस णं पंचासीइं जोयणसयाइं अबाहाए अंतरे प० ॥ ( सूत्रं ) ८५ ॥

अथ पञ्चाशीतिस्थानके किञ्चिल्लिख्यते, तत्राचारस्य–प्रथमाङ्गस्य नवाध्ययनात्मकप्रथमश्रुतस्कन्धरूपस्य 'सचूलियागस्स' इति द्वितीये हि तस्य श्रुतस्कन्धे पञ्च चूलिकाः तासु च पञ्चमी निशीथाख्येह न गृह्यते भिन्नस्थानरूपत्वात्तस्याः, तासु च प्रथमद्वितीये सप्तसप्ताध्ययनात्मिके तृतीयचतुर्थ्यावेकैकाध्ययनात्मिके तदेवं सह चूलिकाभिर्वर्त्तत इति सचूलिकाकस्तस्य पञ्चाशीतिरुद्देशनकाला भवन्तीति, प्रत्यध्ययनं उद्देशनकालानामेतावत्संख्यत्वात्, तथाहि–प्रथमश्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्त ७ षट् १३ चत्वार १७ श्चत्वारः २१ षट् २७ पञ्च ३२ अष्ट ४० चत्वारः ४४ सप्त ५१ चेति, द्वितीयश्रुतस्कन्धे तु प्रथमचूलिकायां सप्तस्वध्ययनेषु क्रमेण एकादश ६२ त्रय ६५ स्त्रयः ६८ चतुर्षु द्वौ द्वौ ७६ द्वितीयायां सप्तैकसराणि ८३ अध्ययनान्येवं तृतीयैकाध्ययनात्मिका ८४ एवं चतुर्थ्यपीति ८५ सर्वमीलने पञ्चाशीतिरिति । तथा धातकीखण्डमन्दरौ सहस्रमवगाढौ चतुरशीतिसहस्राण्युच्छ्रिताविति पञ्चाशीतियोजनसहस्राणि सर्वाग्रेण भवतः, पुष्कराद्धमन्दरावप्येवं, नवरं सूत्रे नाभिहितौ विचित्रत्वात्सूत्रगतेरिति, तथा

मंदरस्स णं पव्वयस्स पुरच्छिमिल्लाओ चरमंताओ गोथुभस्स आवासपव्वयस्स पच्चच्छिमिल्ले चरमंते एस णं सत्तासीइं जोयणसहस्साइं अबाहाए अंतरे प०, मंदरस्स णं पव्वयस्स दक्खिणिल्लाओ चरमंताओ दगभासस्स आवासपव्वयस्स उत्तरिल्ले चरमंते एस णं सत्तासीई जोयणसहस्साइं अबाहाए अंतरे प०, एवं मंदरस्स पच्चच्छिमिल्लाओ चरमंताओ संखस्सावा० पुरच्छिमिल्ले चरमंते, एवं चेव मंदरस्स उत्तरिल्लाओ चरमंताओ दगसीमस्स आवासपव्वयस्स दाहिणिल्ले चरमंते एस णं सत्तासीई जोयणसहस्साइं अबाहाए अंतरे प०, छण्हं कम्मपगडीणं आइमउवरिल्लवज्जाणं सत्तासीई उत्तरपगडीओ प०, महाहिमवंतकूडस्स णं उवरिमंताओ सोगन्धियस्स कंडस्स हेट्ठिल्ले चरमंते एस णं सत्तासीइ जोयणसयाइं अबाहाए अंतरे प०, एवं रुप्पिकूडस्सवि ॥ सूत्रं ॥ ८७॥

अथ सप्ताशीतिस्थानके किञ्चिल्लिख्यते, 'मन्दरे'त्यादि, मेरोः पौरस्त्यान्तात् जम्बूद्वीपान्तः पञ्चचत्वारिंशत्सहस्राणि द्विचत्वारिंशच्च सहस्राणि लवणजलधिमवगाह्य गोस्तुभो वेलन्धरनागराजावासपर्वतः प्राच्यां दिशि भवति, एवं सूत्रोक्तमन्तरं भवतीति, एवमन्येषां त्रयाणामन्तरमवसेयमिति । तथा षण्णां कर्मप्रकृतीनामादिमोपरिमवर्जानां—ज्ञानावरणान्तरायरहितानां दर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रसंज्ञितानामित्यर्थः सप्ताशीतिरुत्तरप्रकृतयः प्रज्ञप्ताः, कथं ?, दर्शनावरणादीनां षण्णां क्रमेण नव द्वे अष्टाविंशतिः चतस्रो द्विचत्वारिंशद्वे चेत्यतस्तासां मीलने सूत्रोक्तसंख्या स्यादिति । 'महाहिमवन्ते'त्यादि, महाहिमवति द्वितीयवर्षधरपर्वते अष्टौ सिद्धायतनकूटमहाहिमवत्कूटादीनि कूटानि भवन्ति, तानि पञ्चशतोच्छ्रितानि, तत्र महाहिमवत्कूटस्य पञ्च शतानि द्वे शते महाहिमव-

योगचूलिकाभेदेन पञ्चप्रकारस्य 'सुत्ताइं'ति द्वितीयप्रकारभूतानि अष्टाशीतिर्भवन्ति 'जहा नंदीए'त्ति अतिदेशतः सूत्राणि दर्शितानि तानि चाग्रे व्याख्यास्यामः, 'मंदरस्से'त्यादि, मेरोः पूर्वान्तात् जम्बूद्वीपस्य पञ्चचत्वारिंशद्योजनसहस्रमानात् जम्बूद्वीपान्ताच्च द्विचत्वारिंशद्योजनसहस्रेषु गोस्तुभस्य व्यवस्थितत्वात् तस्य च सहस्रविष्कम्भत्वाद् यथोक्तः सूत्रार्थो भवतीति, अनेनैव क्रमेण दक्षिणादिदिग्व्यवस्थितान् दकावभासशंखदकसीमाख्यान् वेलन्धरनागराजनिवासपर्वतानाश्रित्य वाच्यमत एवाह—'एवं चउसुवि दिसासु नेयव्व'मिति। 'बाहिराओ ण'मित्यादि, बाह्यायाः सर्वाभ्यन्तरमण्डलरूपाया उत्तरस्याः काष्ठायाः क्वचित् 'बाहिराओ'त्ति न दृश्यते सूर्यः प्रथमं षण्मासं दक्षिणायनलक्षणं दक्षिणायनादित्वात् संवत्सरस्य 'अयमाणे'त्ति आयान्—आगच्छन् चतुश्चत्वारिंशत्तममण्डलगतोऽष्टाशीतिमेकषष्टिभागान्, 'दिवसखेत्तस्स'त्ति दिवसस्यैव 'निवुड्ढेत्त'त्ति निवर्द्ध्य हापयित्वा 'रयणिखेत्तस्स'त्ति रजन्यास्तु अभिवर्द्ध्य 'सूरिए चारं चरइ'त्ति भ्राम्यतीति, इह च भावनैवं—प्रतिमण्डलं दिनस्य मुहूर्त्तैकषष्टिभागद्वयहानेर्दक्षिणायनापेक्षया चतुश्चत्वारिंशत्तमे अष्टाशीतिर्भागा हीयन्ते, रात्रेस्तु त एव वर्द्धन्त इति, द्विः सूर्यग्रहणं चेह दिनरात्र्याश्रितवाक्यद्वयभेदकल्पनया ततो न पुनरुक्तमवसेयं, इदं च सूत्रमष्टसप्ततिस्थानकसूत्रवद्भावनीयमिति, 'दक्खिणकट्ठाओ' इति आदिसूत्रं पूर्वसूत्रवदवगन्तव्यं नवरमिह दिनवृद्धिः रात्रिहानिश्च भावनीयेति ॥ ८८ ॥

उसभे णं अरहा कोसलिए इमीसे ओसप्पिणीए ततियाए सुसमदूसमाए पच्छिमे भागे एगूणणउए अद्धमासेहिं सेसेहिं कालगए

नवतिवर्षाणि विजयः-पृथिवीसाधनव्यापारः, 'सव्वेसि ण'मित्यादि, सर्वेषां विंशतेरपि वर्तुलवैताढ्यानां—शब्दापातिप्रभृतीनां योजनसहस्रोच्छ्रितत्वात् सौगन्धिककाण्डचरमान्तस्य चाष्टसु सहस्रेषु व्यवस्थितत्वात् नवसु सहस्रेषु नवतेः शतानां भावात् सूत्रोक्तमन्तरमनवद्यमिति ॥ ९० ॥

एकाणउई परवेयावच्चकम्मपडिमाओ प०, कालोए णं समुद्दे एकाणउई जोयणसयसहस्साइं सहियाइं परिक्खेवेणं प०, कुंथुस्स णं अरहओ एकाणउई आहोहियसया होत्था, आउयगोयवज्जाणं छण्हं कम्मपगडीणं एकाणउई उत्तरपगडीओ प० ॥ सूत्रं ९१ ॥

अथैकनवतिस्थानके किञ्चिद्वितन्यते, तत्र परेषां—आत्मव्यतिरिक्तानां वैयावृत्यकर्म्माणि—भक्तपानादिभिरुपष्टम्भक्रियास्तद्विषयाः प्रतिमाः—अभिग्रहविशेषाः परवैयावृत्त्यकर्म्मप्रतिमाः, एतानि च प्रतिमात्वेनाभिहितानि क्वचिदपि नोपलब्धानि, केवलं विनयवैयावृत्त्यभेदा एते स(म्भव)न्ति, तथाहि—दर्शनगुणाधिकेषु सत्कारादिर्दशधा विनयः, आह च—"सक्कार १ ब्भुट्ठाणे २ सम्माणे ३ आसण[भि]ग्गहो ४ तहय। आसणअणुप्पयाणं ५ किइकम्मं ६ अञ्जलिगहो य ७ ॥ १ ॥ इंतस्सणुगच्छणया ८ ठियस्स तह पज्जुवासणा भणिया ९। गच्छंताणुव्वयणं १० एसो सुस्सूसणाविणओ' ॥ २ ॥ [सत्कारोऽभ्युत्थानं सन्मानं आसनाभिग्रहः तथा च। आसनानुप्रदानं कृतिकर्म अञ्जलिप्रग्रहः ॥१॥ ] त्ति [ आयतोऽनुगमनं स्थितस्य तथा पर्युपासना भणिता। गच्छतोऽनुव्रजनं एष शुश्रूषाविनयः ॥ २ ॥ ] तत्र सत्कारो—वन्दनस्तवनादिः १ अभ्युत्थानं—आसनत्यागः २ सन्मानो—वस्त्रादिपूजनं ३ आसनाभिग्रहः

त्तकरणं—सम्यक्शास्त्रपदमध्यापितस्य विशेषेण विनये वर्त्तनं तदर्थानुष्ठानं च, शेषाणि प्रसिद्धानि, तथा वैयावृत्त्यं
दशधा, यदाह—'आयरिय उवज्झाए थेरतवस्सी गिलाणसेहाणं। साहम्मिय कुलगणसंघसङ्गयं तमिह कायव्वं ॥१॥'
[ आचार्योपाध्यायस्थविरतपस्विग्लानशैक्षाणां। साधर्मिके कुलगणसंघानां संगतं तदिह कर्त्तव्यं॥ १ ॥ ] इति, तत्र
प्रव्राजना १ दिगु २ द्देश ३ समुद्देश ४ वाचना ५ चार्यविनयो भवति, तथौपचारिकविनयोऽभ्यासवृत्त्यादिः सप्तधा,
तथा वैयावृत्त्यं दशभेदादाचार्यस्य च पञ्चविधत्वात्तदेवं चतुर्दशधेत्येकनवतिर्विनयभेदा एते एव अभिग्रहविषयीभूताः
प्रतिमा उच्यन्त इति। दर्श० १० अना० ६० औप० ७ वैया० १४। तथा 'कालोए णं'ति कालोदः समुद्रः, स चैकनव-
तिर्लक्षाणि साधिकानि परिक्षेपेण, आधिक्यं च सप्तत्या सहस्रैः षड्भिः शतैः पञ्चोत्तरैः सप्तदशभिर्धनुःशतैः पञ्चद-
शोत्तरैः सप्ताशीत्या चाङ्गुलैः साधिकैरिति 'आहोहिय'त्ति नियतक्षेत्रविषयावधयः। आयुर्गोत्रवर्जानां 'पण्णा'मिति
ज्ञानावरणदर्शनावरणवेदनीयमोहनीयनामान्तरायाणां क्रमेण पञ्चनवद्व्यष्टाविंशतिर्द्विचत्वारिंशत्पञ्चभेदानामिति ॥९१॥

वाण उई पडिमाओ पं०, थेरे णं इंदभूती बाणउइ वासाइं सव्वाउयं पालइत्ता सिद्धे बुद्धे, मंदरस्स णं पव्वयस्स बहुमज्झदेसभागाओ गोथुभस्स आवासपव्वयस्स पच्चच्छिमिल्ले चरमंते एस णं बाणउइं जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउण्हंपि आवासपव्वयाणं ॥ सूत्रं ॥ ९२ ॥

अथ द्विनवतिस्थानके किमप्यभिधीयते, द्विनवतिः प्रतिमाः-अभिग्रहविशेषाः, ताश्च दशाश्रुतस्कन्धनिर्युक्त्यनु-

जम्बूद्वीपस्य पञ्चाशत्सहस्राणि ततो द्विचत्वारिंशत् सहस्राण्यतिक्रम्य गोस्तुभपर्वत इति सूत्रोक्तमन्तरं भवतीति, एवं शेषाणामपि ॥ ९२ ॥

चंदप्पहस्स णं अरहओ तेणउई गणा तेणउई गणहरा होत्था, संतिस्स णं अरहओ तेणउई चउद्दसपुव्विसया होत्था, तेणउईमंडलगते णं सूरिए अतिवट्टमाणे निवट्टमाणे वा समं अहोरत्तं विसमं करेइ । सूत्रं ९३ ॥

अथ त्रिनवतिस्थानके किमपि वितन्यते, 'तेणउईमंडले'त्यादि, तत्र अतिवर्त्तमानो वा–सर्वबाह्यात् सर्वाभ्यन्तरं प्रति गच्छन् निवर्त्तमानो वा-सर्वाभ्यन्तरात् सर्वबाह्यं प्रति गच्छन् व्यत्ययो वा व्याख्येयः, सममहोरात्रं विषमं करोतीत्यर्थः, अहश्च रात्रिश्च अहोरात्रं तयोः समता तदा भवति यदा पञ्चदश पञ्चदश मुहूर्त्ता उभयोरपि भवन्ति, तत्र सर्वाभ्यन्तरमण्डले अष्टादशमुहूर्त्तमहर्भवति रात्रिश्च द्वादशमुहूर्त्ता, सर्वबाह्ये तु व्यत्ययः, तथा त्र्यशीत्यधिकमण्डलशते द्वौ द्वावेकषष्टिभागौ वर्द्धते हीयेते च, यदा च दिनवृद्धिस्तदा रात्रिहानिः रात्रिवृद्धौ च दिनहानिरिति, तत्र द्विनवतितमे मण्डले प्रतिमण्डलं मुहूर्त्तैकषष्टिभागद्वयवृद्ध्या त्रयो मुहूर्त्ता एकेनैकषष्टिभागेनाधिकाः वर्द्धन्ते वा हीयन्ते वा, तेषु च द्वादशमुहूर्त्तेषु मध्ये क्षिप्तेषु अष्टादशभ्योऽपसारितेषु वा पञ्चदश मुहूर्त्ता उभयत्रैकेनैकषष्टिभागेनाधिका हीना वा भवन्तो द्विनवतितममण्डलस्यार्द्धे समाहोरात्रता तस्यैव चान्ते विषमाहोरात्रता भवति, द्विनवतितमं मण्डलं चादित आरभ्य त्रिनवतितमं तत्र च मण्डले यथोक्तः सूत्रार्थ इति ॥ ९३ ॥

तम०

स्रेष्वतिक्रान्तेषु समुद्रतटप्रदेशेषु उद्वेधसहस्रस्यापि परिहानिर्भवतीत्यर्थः, समभूतलत्वं भवतीति, तथा समुद्रमध्यभागापेक्षया तत्तटस्य साहस्रिक उत्सेधो भवति, उत्सेधश्चोच्चत्वं, तत्र समधरणीतलरूपात्ततटात्पञ्चनवतिं प्रदेशानतिक्रम्य एकप्रदेशिका उत्सेधस्य परिहानिर्भवति, ततोऽपि पञ्चनवतिं प्रदेशान् गत्वा प्रादेशिक्येवोत्सेधहानिर्भवति, एवं पञ्चनवतिपञ्चनवतिप्रदेशातिक्रमेण प्रादेशिक्यां प्रादेशिक्यां उत्सेधहान्यां पञ्चनवत्यां योजनसहस्रेष्वतिक्रान्तेषु समुद्रमध्यभागे सहस्रमपि उत्सेधस्य परिहीयते, एवं साहस्रिकोत्सेधपरिहानौ साहस्रिकोद्वेधता भवति 'लवणस्से'ति, अथवोद्वेधार्थं योत्सेधपरिहानिस्तस्यां च पञ्चनवतिः प्रदेशाः—प्रज्ञप्तास्तेष्वतिलङ्घितेषु उत्सेधतः प्रदेशपरिहान्यामुद्वेधः प्रादेशिको भवतीति, तथा कुन्थुनाथस्य—सप्तदशतीर्थंकरस्य कुमारत्वमाण्डलिकत्वचक्रवर्त्तित्वानगारत्वेषु प्रत्येकं त्रयोविंशतेर्वर्षसहस्राणामर्द्धाष्टमवर्षशतानां च भावात्सर्वायुः पञ्चनवतिर्वर्षसहस्राणि भवन्तीति, तथा मौर्यपुत्रो-महावीरस्य सप्तमगणधरस्तस्य पञ्चनवतिर्वर्षाणि सर्वायुः, कथं ?, गृहस्थत्वछद्मस्थत्वकेवलित्वेषु क्रमेण पञ्चपष्टिचतुर्दशषोडशानां वर्षाणां भावादिति ॥ ९५ ॥

एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स छण्णउई छणउई गामकोडीओ होत्था, वायुकुमाराणं छण्णउइ भवणावाससयसहस्सा प०, ववहारिए णं दंडे छण्णउइ अङ्गुलाइं अंगुलमाणेणं, एवं धणू नालिया जुगे अक्खे मुसलेवि हु, अब्भितरओ आइमुहुत्ते छण्णउइअंगुलछाए प० ॥ सूत्रं ९६ ॥

र्तिं वर्षशतानि गृहमध्युषितस्त्रीणि चाधिकानि प्रव्रज्यां पालितवान् दशवर्षसहस्रत्वात्तदायुष्कस्येति ॥ ९७ ॥

नंदणवणस्स णं उवरिल्लाओ चरमंताओ पंडुयवणस्स हेट्ठिल्ले चरमंते एस णं अट्ठाणउइ जोयणसहस्साइं अबाहाए अंतरे प०, मंदरस्स णं पव्वयस्स पच्चच्छिमिल्लाओ चरमंताओ गोथुभस्स आवासपव्वयस्स पुरच्छिमिल्ले चरमंते एस णं अट्ठाणउइ जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउदिसिंपि, दाहिणभरहस्स णं धणुप्पिट्ठे अट्ठाणउइ जोयणसयाइं किंचूणाइं आयामेणं प०, उत्तराओ कट्ठाओ सूरिए पढमं छम्मासं अयमाणे एगूणपन्नासतिमे मण्डलगते अट्ठाणउइ एकसट्ठिभागे मुहुत्तस्स दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढित्ता णं सूरिए चारं चरइ, दक्खिणाओ णं कट्ठाओ सूरिए दोच्चं छम्मासं अयमाणे एगूणपन्नासइमे मंडलगते अट्ठाणउइ एकसट्ठिभाए मुहुत्तस्स रयणिखित्तस्स निवुड्ढेत्ता दिवसखेत्तस्स अभिनिवुड्ढित्ता णं सूरिए चारं चरइ, रेवईपढमजेट्ठापज्जवसाणाणं एगूणवीसाए नक्खत्ताणं अट्ठाणउइ ताराओ तारग्गेणं प० ॥ सूत्रं ९८ ॥

अथाष्टनवतिस्थानके किञ्चिदभिधीयते–'नंदणवणे'त्यादि, भावार्थोऽयं–नन्दनवनं मेरोः पञ्चयोजनशतोच्छ्रितप्रथममेखलाभावि पञ्चयोजनशतोच्छ्रितं तद्गतपञ्चयोजनशतोच्छ्रितकूटाष्टकस्य तद्ग्रहणेन ग्रहणात् तथा पण्डकवनं च मेरुशिखरव्यवस्थितं अतो नवनवत्या मेरोरुच्चैस्त्वस्य आद्ये सहस्रे अपकृष्टे यथोक्तमन्तरं भवतीति । गोस्तुभसूत्रभावार्थः पूर्ववन्नवरं गोस्तुभविष्कम्भसहस्रे क्षिप्ते यथोक्तमन्तरं भवतीति । 'वेयड्ढस्स ण'मित्यादि यः केषुचित्पुस्तकेषु दृश्यते सोऽपपाठः, सम्यक्पाठश्चायं–'दाहिणभरहड्ढस्स णं धणुपिट्ठे अट्ठाणउइं जोयणसयाइं किंचूणाइं आयामेणं

एस णं नवनउइ जोयणसयाइं अबाहाए अंतरे प०, एवं दक्खिणिल्लाओ चरमंताओ उत्तरिल्ले चरमंते एस णं णवणउइ जोयणसयाइं अबाहाए अंतरे प०, उत्तरे पढमे सूरियमंडले नवनउइजोयणसहस्साइं साइरेगाइं आयामविक्खंभेणं प०, दोच्चे सूरियमंडले नवनउइ जोयणसहस्साइं साहियाइं आयामविक्खंभेणं प०, तइए सूरियमंडले नवनउइ जोयणसहस्साइं साहियाइं आयामविक्खंभेणं प०, इमीसे णं रयणप्पभाए पुढवीए अंजणस्स कंडस्स हेट्ठिल्लाओ चरमंताओ वाणमंतरभोमेज्जविहाराणं उवरिमंते एस णं नवनउइ जोयणसयाइं अबाहाए अंतरे प० ॥ सूत्रं ९९ ॥

अथ नवनवतिस्थानके किमपि लिख्यते—'नंदणवणे'त्यादि, अस्य भावार्थः—मेरुविष्कम्भो मूले दश सहस्राणि, नन्दनवनस्थाने तु नवनवतिर्योजनशतानि चतुःपञ्चाशच्च योजनानि षट् योजनैकादशभागा बाह्यो गिरिविष्कम्भो नन्दनवनाभ्यन्तरस्तु मेरुविष्कम्भ एकोननवतिः शतानि चतुःपञ्चाशदधिकानि षट् चैकादशभागास्तथा पञ्च शतानि नन्दनवनविष्कम्भः, तदेवमभ्यन्तरगिरिविष्कम्भो द्विगुणनन्दनवनविष्कम्भश्च मिलितो यथोक्तमन्तरं प्रायो भवति, 'पढमसूरियमंडले'त्ति, इह जम्बूद्वीपप्रमाणस्याशीत्युत्तरशते द्विगुणिते अपहृते यो राशिः स प्रथममण्डलस्यायामविष्कम्भः, स च नवनवतिः सहस्राणि षट् च शतानि चत्वारिंशदधिकानि, द्वितीयं तु नवनवतिः सहस्राणि षट् शतानि पञ्चचत्वारिंशच्च योजनानि योजनस्य च पञ्चत्रिंशदेकषष्टिभागाः, कथं?, मण्डलस्य मण्डलस्य चान्तरं द्वे द्वे योजने, सूर्यविमानविष्कम्भश्चाष्टचत्वारिंशदेकषष्टिभागाः, एतद्द्विगुणितं पञ्च योजनानि पञ्चत्रिंशदेकषष्टिभागाश्चेति

पार्श्वनाथस्त्रिंशद्वर्षाणि कुमारत्वं ससतिं चानगारत्वमित्येवं शतमायुः पालयित्वा सिद्धः, एवं 'थेरेवि अज्जसुहमे'त्ति आर्यसुधर्म्मो–महावीरस्य पञ्चमो गणधरः सोऽपि वर्षशतं सर्वायुः पालयित्वा सिद्धस्तथा च तस्यागारवासः पञ्चाशद्वर्षाणि छद्मस्थपर्यायो द्विचत्वारिंशत्केवलिपर्यायोऽष्टौ, भवति चैतद्राशित्रयमीलने वर्षशतमिति । वैताढ्यादिपूच्चत्वचतुर्थांशः उद्वेधः, काञ्चनका उत्तरकुरुषु देवकुरुषु क्रमव्यवस्थितानां पञ्चानां महाहृदानामुभयतो दश दश व्यवस्थितास्ते च जम्बूद्वीपे शतद्वयसंख्याः समवसेया इति ॥ १०० ॥

चंदप्पभे णं अरहा दिवड्ढं धणुसयं उड्ढ उच्चत्तेणं होत्था, आरणे कप्पे दिवड्ढं विमाणावाससयं प०, एवं अच्चुएवि १५० सूत्रं १०१ ॥

सुपासे णं अरहा दो धणुसया उड्ढं उच्चत्तेणं होत्था, सव्वेवि णं महाहिमवंतरुप्पीवासहरपव्वया दो दो जोयणसयाइं उड्ढं उच्चत्तेणं प०, दो दो गाउयसयाइं उव्वेहेणं प०, जम्बुद्दीवे णं दीवे दो कंचणपव्वयसया प० ॥ २०० सूत्रं १०२ ॥

अथैकोत्तरस्थानवृद्ध्या सूत्ररचनां परित्यज्य पञ्चाशच्छतादिवृद्ध्या तां कुर्वन्नाह–'चंदप्पहे'त्यादि, सुगमं सर्वमाद्वादशाङ्गगणिपिटकसूत्रात् ॥ २०० ॥

पउमप्पभे णं अरहा अड्ढाइज्जाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था, असुरकुमाराणं देवाणं पासायवडिंसगा अड्ढाइज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं प० ॥ २५० सूत्रं ॥ १०३ ॥

नवरं 'पासायवडिंसय'त्ति अवतंसकाः–शेखरकाः कर्णपूराणि वा अवतंसका इव अवतंसकाः प्रधाना इत्यर्थः प्रासादाश्च ते अवतंसकाः प्रासादानां वा मध्ये अवतंसकाः प्रासादावतंसकाः ॥ २५० ॥

प०, समणस्स णं भगवओ महावीरस्स चत्तारि सया वाईणं सदेवमणुयासुरंमि लोगंमि वाए अपराजियाणं उक्कोसिया वाइसंपया होत्था ॥ ४०० ॥ सूत्रं १०६ ॥

'सवेऽवि णं वक्खारपव्वए'त्यादि, वक्षस्कारपर्वता एकक्षेत्रप्रतिबद्धा विंशतिस्ते च वर्षधराः ते च चतुःचतुःशतोच्चाः ॥

अजिते णं अरहा अद्धपंचमाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था, सगरे णं राया चाउरंतचक्कवट्टी अद्धपंचमाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था ॥ ४५० ॥ सूत्रं १०७ ॥ सव्वेवि णं वक्खारपव्वय सीआ सीओआओ महानईओ मंदरपव्वयंतेणं पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं पंच पंच गाउयसयाइं उव्वेहेणं प०, सव्वेवि णं वासहरकूडा पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं होत्था मूले पंच पंच जोयणसयाइं विक्खंभेणं प०, उसभे णं अरहा कोसलिए पंच धणुसयाइं उड्ढं उच्चत्तेणं होत्था, भरहे णं राया चाउरंतचक्कवट्टी पंचधणुसयाइं उड्ढं उच्चत्तेणं होत्था, सोमणसगंधमादणविज्जुप्पभमालवंताणं वक्खारपव्वयाणं मंदरपव्वयंतेणं पंच २ जोयणसयाइं उड्ढं उच्चत्तेणं पंच पंच गाउयसयाइं उव्वेहेणं प०, सव्वेवि णं वक्खारपव्वयकूडा हरिहरिस्सहकूडवज्जा पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं मूले पंच पंच जोयणसयाइं आयामविक्खंभेणं प०, सव्वेवि णं नंदणकूडा बलकूडवज्जा पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं मूले पंच पंच जोयणसयाइं आयाममविक्खंभेणं प०, सोहम्मीसाणेसु कप्पेसु विमाणा पंच २ जोयणसयाइं उड्ढं उच्चत्तेणं प० ॥ ५०० ॥ सूत्रं १०८ ॥

सवेविणं वक्खारेत्यादि शीतादिनदीप्रत्यासत्तौ मेरुप्रत्यासत्तौ च पञ्चशतोच्चा इति, तथा 'सवेवि णं वासे'त्यादि, तत्र

सया वाईणं सदेवमणुयासुरे लोए वाए अपराजियाणं उक्कोसिया वाईसंपया होत्था, अभिचंदे णं कुलगरे छ धणुसयाइं उड्ढं उच्चत्तेणं होत्था, वासुपुज्जे णं अरहा छहिं पुरिससएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ ६०० ॥ सूत्रं १०९ ॥

'चुल्लहिमवंतकूडस्से'त्यादि, इह भावार्थो–हिमवान् योजनशतोच्छ्रितस्तत्कूटं च पञ्चशतोच्छ्रितं इति सूत्रोक्तमन्तरं भवतीति, 'अभिचंदे णं कुलकरे'त्ति अभिचन्द्रः कुलकरोऽस्यामवसर्पिण्यां सप्तानां कुलकराणां चतुर्थः, तस्योच्छ्रयः षट् धनुःशतानि पञ्चाशदधिकानि ॥ ६०० ॥

बंभलंतएसु कप्पेसु विमाणा सत्त सत्त जोयणसयाइं उड्ढं उच्चत्तेणं प०, समणस्स णं भगवओ महावीरस्स सत्त जिणसया होत्था, समणस्स भगवओ महावीरस्स सत्त वेउव्वियसया होत्था, अरिट्ठनेमी णं अरहा सत्त वाससयाइं देसूणाइं केवलपरियागं पाउणित्ता सिद्धे बुद्धे जावप्पहीणे, महाहिमवंतकूडस्स णं उवरिल्लाओ चरमंताओ महाहिमवंतस्स वासहरपव्वयस्स समधरणितले एस णं सत्त जोयणसयाइं अबाहाए अंतरे प०, एवं रुप्पिकूडस्सवि ॥ ७०० सूत्रं ११० ॥

श्रमणस्य भगवतो महावीरस्य सप्त जिनशतानि केवलिशतानीत्यर्थः, तथा श्रमणस्य भगवतो महावीरस्य सप्त वैक्रियशतानि वैक्रियलब्धिमत्साधुशतानीत्यर्थः, 'अरिट्ठे'त्यादि, 'देसूणाइं'ति चतुःपञ्चाशतो दिनानामूनानि, तत्प्रमाणत्वात् छद्मस्थकालस्येति, 'महाहिमवंते'त्यादौ भावार्थोऽयं–महाहिमवान् योजनशतद्वयोच्छ्रितस्तत्कूटं च पञ्चशतोच्छ्रितमिति सूत्रोक्तमन्तरं भवतीति ॥ ७०० ॥

णिसढस्स वासहरपव्वयस्स समे धरणितले एस णं नव जोयणसयाइं अवाहाए अंतरे प०, एवं नीलवंतकूडस्सवि, विमलवाहणे णं कुलगरे णं नव धणुसयाइं उड्ढं उच्चत्तेणं होत्था, इमीसे णं रयणप्पभाए वहुसमरमणिज्जाओ भूमिभागाओ नवहिं जोयणसएहिं सव्वुवरिमे ताराख्वे चारं चरइ, निसढस्स णं वासहरपव्वयस्स उवरिल्लाओ सिहरतलाओ इमीसे णं रयणप्पभाए पुढवीए पढमस्स कंडस्स वहुमज्झदेसभाए एस णं नव जोयणसयाइं अवाहाए अंतरे प०, एवं नीलवंतस्सवि ॥ ९०० सूत्रं ११२ ॥

'निसहकूडस्स ण'मित्यादि, इहायं भावः—निषधकूटं पञ्चशतोच्छ्रितं निषधश्च चतुःशतोच्छ्रित इति यथोक्तमन्तरं भवतीति ॥ ९०० ॥

सव्वेवि णं गेवेज्जविमाणे दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प०, सव्वेवि णं जमगपव्वया दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प० दस दस गाउयसयाइं उव्वेहेणं प० मूले दस दस जोयणसयाइ आयामविक्खंभेणं प०, एवं चित्तविचित्तकूडावि भाणियव्वा, सव्वेवि णं वट्टवेयड्ढपव्वया दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प० दस दस गाउयसयाइं उव्वेहेणं प० मूले दस दस जोयणसयाइं विक्खंभेणं प०, सव्वत्थ समा पल्लगसंठाणसंठिया प०, सव्वेवि णं हरिहरिस्सहकूडा वक्खारकूडवज्जा दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प०, मूले दस जोयणसयाइं विक्खंभेणं, एवं वलकूडावि नंदणकूडवज्जा, अरहावि अरिट्ठनेमी दस वाससयाइं सव्वाउयं पालइत्ता सिद्धे वुद्धे जाव सव्वदुक्खप्पहीणे, पासस्स णं अरहओ दस सयाइं जिणाणं होत्था, पासस्स णं अरहओ दस अन्तेवासीसयाइं कालगयाइं जाव सव्वदुक्खप्पहीणाइं, पउमद्दहपुंडरीयद्दहा य दस दस जोयणसयाइं आयामेणं प०, ॥ १००० सूत्रं ११३ ॥ अणुत्तरोववाइयाणं देवाणं विमाणा एक्कारस जोयणसयाइं उड्ढं उच्चत्तेणं प०, पासस्स णं अरहओ इक्कारस

यसहस्साइं रायमज्झे वसित्ता मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ ६००००० सूत्रं १२९ ॥ जम्बूदीवस्स णं दीवस्स पुरच्छिमिल्लाओ वेइयंताओ धायइखंडचक्कवालस्स पच्चच्छिमिल्ले चरमंते सत्त जोयणसयसहस्साइं अबाहाए अंतरे प० ॥ ७००००० सूत्रं १३० ॥ माहिंदे णं कप्पे अट्ठ विमाणावाससयसहस्साइं प० ८००००० ॥ सूत्रं १३१ ॥ अजियस्स णं अरहओ साइरेगाइं नव ओहिनाणिसहस्साइं होत्था ॥ ९००० सूत्रं १३२ ॥ पुरिससीहे णं वासुदेवे दस वाससयसहस्साइं सव्वाउयं पालइत्ता पञ्चमाए पुढवीए नेरइएसु नेरइयत्ताए उववन्ने ॥ १०००००० सूत्रं १३३ ॥ समणे भगवं महावीरे तित्थगरभवग्गहणाओ छट्ठे पोट्टिलभवग्गहणे एगं वासकोडिं सामन्नपरियागं पाउणित्ता सहस्सारे कप्पे सव्वट्ठविमाणे देवत्ताए उववन्ने ॥ १००००००० सूत्रं १३४ ॥ उसभसिरिस्स भगवओ चरिमस्स य महावीरवद्धमाणस्स एगा सागरोवमकोडाकोडी अबाहाए अंतरे प० ॥ १००००००००००००००० सूत्रं १३५ ॥

'सव्वेवि णं जमगे'त्यादि, उत्तरकुरुषु नीलवद्वर्षधरस्य—उत्तरतः शीताया महानद्या उभयोः कूलयोर्द्वौ यमकाभिधानौ पर्वतौ स्तः, ते च पञ्चस्वप्युत्तरकुरुषु द्वयोर्द्वयोर्भावाद्दश, एवं 'चित्तविचित्तकूडावि'त्ति पञ्चसु देवकुरुषु यमकवत्तत्सद्भावात् पञ्च चित्रकूटाः पञ्च विचित्रकूटा इति, 'सव्वेवि ण'मित्यादि, सर्वेऽपि वृत्ता वैताढ्या विंशतिः शब्दापात्यादयः, 'सव्वेवि णं हरी'त्यादि, हरिकूटं विद्युत्प्रभाभिधाने गजदन्ताकारवक्षस्कारपर्वते हरिसहकूटं तु माल्यवद्वक्षस्कारे, तानि च पञ्चस्वपि मन्दरेषु भावात् पञ्च पञ्च भवन्ति सहस्रोच्छ्रितानि च, 'वक्खारकूडवज्ज'त्ति शेषवक्षस्कारकूटेष्वेवमुच्चत्वं नास्त्येतष्वेवास्तीत्यर्थः, एवं 'बलकूडावि'त्ति पञ्चसु मन्दरेषु पञ्च नन्दनवनानि तेषु प्रत्ये-

सप्तसहस्राणि ॥ ७००० ॥ 'हरिवासे'त्यादि, इहार्थे गाथार्द्धं–'हरिवासे इगवीसा चुलसी य सया कला य एका य'त्ति ॥ ८००० ॥ 'दाहिणे'त्यादि दक्षिणो भागो भरतस्येति दक्षिणार्द्धभरतं तस्य जीवेव जीवा–ऋज्वी सीमा प्राचीनं–पूर्वतः प्रतीचीनं–पश्चिमतः आयता–दीर्घा प्राचीनप्रतीचीनायता 'दुहओ'त्ति उभयतः पूर्वापरपार्श्वयोरित्यर्थः, समुद्रं–लवणसमुद्रं स्पृष्टा–छुप्तवती नव सहस्राण्यायामत इहोक्ता, स्थानान्तरे तु तद्विशेषोऽयं'नव सहस्राणि सप्त शतान्यष्टचत्वारिंशदधिकानि द्वादश च कला' इति ॥ ९००० ॥ १०००० ॥ १००००० ॥ २००००० ॥ ३००००० ॥ ४००००० ॥ 'लवणे'त्यादि, तत्र जम्बूद्वीपस्य लक्षं चत्वारि च लवणस्येति पञ्च ॥ ५००००० ॥ 'जम्बूदीवस्से'त्यादि, तत्र लक्षं जम्बूद्वीपस्य द्वे लवणस्य चत्वारि धातकीखण्डस्येति सप्त लक्षाण्यन्तरं सूत्रोक्तं भवतीति ७००००० ॥ अजितस्यार्हतः सातिरेकाणि नवावधिज्ञानिसहस्राणि, अतिरेकश्चत्वारि शतानि, इदं च सहस्रस्थानकमपि लक्षस्थानकाधिकारे यदधीतं तत् सहस्रशब्दसाधर्म्याद्विचित्रत्वाद्वा सूत्रगतेर्लेखकदोषाद्वेति ॥ ९००००० ॥ पुरुषसिंहः पञ्चमवासुदेवः ॥ १०००००० ॥ 'समणे'त्यादि, यतो भगवान् पोट्टिलाभिधानराजपुत्रो बभूव, तत्र वर्षकोटिं प्रव्रज्यां पालितवानित्येको भवः, ततो देवोऽभूदिति द्वितीयः, ततो नन्दनाभिधानो राजसूनुः छत्राग्रनगर्यां जज्ञे इति तृतीयः, तत्र वर्षलक्षं सर्वदा मासक्षपणेन तपस्तप्त्वा दशमदेवलोके पुष्पोत्तरवरविजयपुण्डरीकाभिधाने विमाने देवोऽभवदिति चतुर्थस्ततो ब्राह्मणकुण्डग्रामे ऋषभदत्तब्राह्मणस्य भार्याया देवानन्दाभिधानायाः कुक्षावुत्पन्न इति

ज्ञाओ निज्जुत्तीओ, से णं अंगट्ठयाए पढमे अंगे दो सुयक्खंधा पणवीसं अज्झयणा पंचासीइं उद्देसणकाला पंचासीइं समुद्देसणकाला अट्ठारस पदसहस्साइं पदग्गेणं संखेज्जा अक्खरा अणंता गमा अणंता पज्जवा परित्ता तसा अणंता थावरा सासया कडा निवद्धा णिकाइया जिणपण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जंति, से एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति पण्णविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जंति । सेत्तं आयारे ॥ सूत्रं १३६ ॥

'दुवालसंगे' इत्यादि, अथवोत्तरोत्तरसंख्याक्रमसंवद्धार्थप्ररूपणमनन्तरमकारि, साम्प्रतं संख्यामात्रसंवद्धपदार्थप्ररूपणायोपक्रम्यते–'दुवालसंगे' इत्यादि, तत्र श्रुतपरमपुरुषस्याङ्गानीवाङ्गानि, द्वादशाङ्गानि–आचारादीनि यस्मिंतद्द्वादशाङ्गं, गुणानां गणोऽस्यास्तीति गणी–आचार्यस्तस्य पिटकमिव पिटकं–सर्वस्वभाजनं गणिपिटकं, अथवा गणिशब्दः परिच्छेदवचनः, तथा चोक्तम्—"आयारंमि अहीए जं नाओ होइ समणधम्मो उ । तम्हा आयारधरो भण्णइ पढमं गणिट्ठाणं ॥ १ ॥ [आचारेऽधीते यत् ज्ञातो भवति श्रमणधर्मस्तु । तस्मादाचारधरो भण्यते प्रथमं गणिस्थानं ॥ १ ॥] परिच्छेदस्थानमित्यर्थः, ततश्च परिच्छेदसमूहो गणिपिटकं, अत्र चैवं पदघटना–यदेतद्गणिपिटकं तत् द्वादशाङ्गं प्रज्ञप्तं, तद्यथा—आचारः सूत्रकृत इत्यादि । 'से किं त'मित्यादि, अथ किं तदाचारवस्तु ? यद्वा अथ कोऽयमाचारः ?, आचर्यत इति वा आचारः साध्वाचरितो ज्ञानाद्यासेवनविधिरितिभावार्थः, एतत्प्रतिपादको ग्र-

दन्यतरोपादाने अन्यतरस्य गतार्थस्याभिधानं तत्सर्वं तत्प्राधान्यख्यापनार्थमेवेत्यवसेयमिति। 'से समासओ' इत्यादि, सःआचारो यमधिकृत्य ग्रन्थस्याचार इति संज्ञा प्रवर्त्तते 'समासतः' संक्षेपतः पञ्चविधः प्रज्ञप्तः, तद्यथा—ज्ञानाचार इत्यादि, तत्र ज्ञानाचारः—श्रुतज्ञानविषयः कालाध्ययनविनयाध्ययनादिरूपो व्यवहारोऽष्टधा 'दर्शनाचारः' सम्यक्त्ववतां व्यवहारो निःशङ्कितादिरूपोऽष्टधा 'चारित्राचारः' चारित्रिणां समित्यादिपालनात्मको व्यवहारः 'तपआचारो' द्वादशविधतपोविशेषानुष्ठितिः 'वीर्याचारो' ज्ञानादिप्रयोजनेषु वीर्यस्यागोपनमिति, 'आयार'त्ति आचारग्रन्थस्य णमित्यलङ्कारे 'परित्ता' संख्येया आद्यन्तोपलब्धेर्नानन्ता भवन्तीत्यर्थः, काः ?—वाचनाः—सूत्रार्थप्रदानलक्षणाः, अवसर्पिण्युत्सर्पिणीकालं वा प्रतीत्य, 'परीते'ति संख्येयान्यनुयोगद्वाराणि—उपक्रमादीनि, अध्ययनानामेव संख्येयत्वात् प्रज्ञापकवचनगोचरत्वाच्च 'संखेज्जाओ पडिवत्तीओ'त्ति द्रव्यार्थे पदार्थाभ्युपगमा मतान्तराणीत्यर्थः, प्रतिपाद्यनि(माद्यभि)ग्रहविशेषा वा 'संखेज्जा वेढ'त्ति वेष्टकाः—छन्दोविशेषाः, एकार्थप्रतिबद्धवचनसङ्कलिकेत्यन्ये, 'संखेज्जा सिलोग'त्ति श्लोकाः—अनुष्टुपछन्दांसि 'संख्याताः 'निर्युक्तयः' निर्युक्तानां—सूत्रेऽभिधेयतया व्यवस्थापितानामर्थानां युक्तिः—घटना विशिष्टा योजना निर्युक्तयुक्तिः, एतस्मिंश्च वाक्ये युक्तशब्दलोपान्निर्युक्तिरित्युच्यते, एताश्च निक्षेपनिर्युक्त्याद्याः संख्येया इति। 'से ण'मित्यादि स आचारो णमित्यलङ्कारे 'अङ्गार्थतया' अङ्गलक्षणवस्तुत्वेन प्रथममङ्गं स्थापनामधिकृत्य, रचनापेक्षया तु द्वादशमङ्गं, प्रथमं पूर्वं तस्य सर्वप्रवचनात् पूर्वं क्रियमाणत्वादिति, द्वौ श्रुतस्कन्धौ-

र्थगमा गृह्यन्ते अर्थपरिच्छेदा इत्यर्थः, ते चानन्ताः, एकस्मादेव सूत्रात्तत्तद्धर्मविशिष्टानन्तधर्म्मात्मकवस्तुप्रतिपत्तेः, अन्ये तु व्याचक्षते—अभिधानाभिधेयवशतो गमा भवन्ति, ते चानन्ताः, अनन्ताः पर्यायाः स्वपरभेदभिन्ना अक्षरार्थपर्याया इत्यर्थः, परित्तास्त्रसा आख्यायन्त इति योगः, त्रसन्तीति त्रसाः—द्वीन्द्रियादयस्ते च परीत्ता नानन्ताः, एवंरूपत्वादेव तेषां, अनन्ताः स्थावरा वनस्पतिकायसहिताः, किंभूता एते ?—'सासया कडा निबद्धा निकाइय'त्ति शाश्वताः द्रव्यार्थतया अविच्छेदेन प्रवृत्तेः कृताः पर्यायार्थतया प्रतिसमयमन्यथात्वावाप्तेर्निबद्धाः—सूत्र एव ग्रथिता निकाचिता—निर्युक्तिसङ्ग्रहणिहेतूदाहरणादिभिः प्रतिष्ठिता जिनैः प्रज्ञप्ता भावाः—पदार्था अन्येऽप्यजीवादयः 'आघविज्जंति'त्ति प्राकृतशैलया आख्यायन्ते—सामान्यविशेषाभ्यां कथ्यन्त इत्यर्थः, प्रज्ञाप्यन्ते नामादिभेदाभिधानेन, प्ररूप्यन्ते नामादिस्वरूपकथनेन, यथा 'पज्जायाणभिधेय'मित्यादि, दर्श्यन्ते उपमामात्रतः 'यथा गौर्गवयस्तथा' इत्यादि, निदर्श्यन्ते हेतुदृष्टान्तोपन्यासेन उपदर्श्यन्ते उपनयनिगमनाभ्यां सकलनयाभिप्रायतो वेति, साम्प्रतमाचाराङ्गग्रहणफलप्रतिपादनायाह—'से एव'मित्यादि, स इत्याचाराङ्गग्राहको गृह्यते, 'एवं आय'त्ति अस्मिन् भावतः सम्यगधीते सत्येवमात्मा भवति, तदुक्तक्रियापरिणामाव्यतिरेकात् स एव भवतीत्यर्थः, इदं च सूत्रं पुस्तकेषु न दृष्टं नन्द्यां तु दृश्यते इतीह व्याख्यातमिति, एवं क्रियासारमेव ज्ञानमिति ख्यापनार्थं क्रियापरिणाममभिधायाधुना ज्ञानमधिकृत्य आह—'एवं नाय'त्ति इदमधीत्य एवं ज्ञाता भवति यथैवेहोक्तमिति, 'एवं विन्नाय'त्ति विविधो विशिष्टो वा ज्ञाता

सिज्जंति उवदंसिज्जंति, से एवं आया एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति पण्णविज्जंति परूविज्जंति निदंसिज्जंति उवदंसिज्जंति, से तं सूअगडे २ ॥ सूत्रं १३७ ॥

'से किं तं सूयगडे' 'सूच सूचायां' सूचनात् सूत्रं सूत्रेण कृतं सूत्रकृतमिति रूढ्योच्यते, 'सूयगडेणं'ति सूत्रकृतेन सूत्रकृते वा स्वसमयाः सूच्यन्ते इत्यादि कण्ठ्यं, तथा सूत्रकृतेन जीवाजीवपुण्यपापाश्रवसंवरनिर्जरावन्धमोक्षावसानाः पदार्थाः सूच्यन्ते, तथा 'समणाण'मित्यादि, अत्र श्रमणानां मतिगुणविशोधनार्थं स्वसमयः स्थाप्यत इति वाक्यार्थः, तत्र श्रमणानां किंभूतानां ?–अचिरकालप्रव्रजितानां, चिरकालप्रव्रजिता हि निर्म्मलमतयो भवन्ति, अहर्निशं शास्त्रपरिचयाद्बहुश्रुतसंपर्काच्चेति, पुनः किंभूतानां ?–'कुसमयमोहमोहमइमोहियाणं'ति कुत्सितः समयः—सिद्धान्तो येषां ते कुसमयाः–कुतीर्थिकास्तेषां मोहः–पदार्थेष्वयथाववोधः कुसमयमोहस्तस्माद्यो मोहः–श्रोतृमनोमूढता तेन मतिर्मोहिता–मूढतां नीता येषां ते कुसमयमोहमतिमोहिताः, अथवा कुसमयाः–कुसिद्धान्तास्तेषां ओघः–संघो मकारस्तु प्राकृतत्वात् तस्माद्यो मोहः–श्रोतृमनोमूढता तेन मतिर्मोहिता येषां ते कुसुमयौघमोहमतिमोहिताः, अथवा कुसमयानां–कुतीर्थिकानां मोहो मोघो वा–शुभफलापेक्षया निष्फलो यो मोहस्तेन मतिर्मोहिता येषां ते कुसमयमोहमोहमतिमोहिताः कुसमयमोघमोहमतिमोहिता वा तेषां, तथा संदेहाः–वस्तुतत्त्वं प्रति संशयाः कुसमयमोहमतिमोहितानामिति विशेषणसान्निध्यात् कुसमयेभ्यः सकाशात् (ते) जाता येषां ते सन्देहजाताः,

र्थेन लब्धाः, अजीवादिष्वप्यष्टास्वेवमेव प्रतिपदं विंशतिर्विकल्पानामतो विंशतिर्नवगुणा शतमशीत्युत्तरं क्रियावादिनामिति, 'चउरासीए अकिरियवाईणं'ति एतेषां च स्वरूपं यथा नन्द्यादिषु तथा वाच्यं, नवरमेतद्व्याख्याने पुण्यापुण्यवर्जाः सप्त पदार्थाः स्थाप्यन्ते, तदधः स्वतः परतश्चेति पदद्वयं, तदधः कालादीनां षष्ठी यदृच्छा न्यस्यते, ततश्च नास्ति जीवः स्वतः कालत इत्येको विकल्पः, एवमेते चतुरशीतिर्भवन्ति । 'सत्तट्ठीए अन्नाणियवाईणं'ति एतेऽपि तथैव, नवरं जीवादीन्नव पदार्थानुत्पत्तिदशमानुपरि व्यवस्थाप्याधः सप्त सदादयः स्थाप्याः, तद्यथा–सत्त्वमसत्त्वं सदसत्त्वमवाच्यत्वं सदवाच्यत्वमसदवाच्यत्वं सदसदवाच्यत्वमिति, तत्र को जानाति जीवस्य सत्त्वमित्येको विकल्पः, एवमसत्त्वमित्यादि, तत एते सप्त नवकास्त्रिषष्टिः, उत्पत्तेस्त्वाद्या एव चत्वारो वाच्याः, इत्येवं सप्तषष्टिरिति, तथा 'बत्तीसाए वेणइयवाईणं'ति, एते चैवं–सुरनृपतिज्ञातियतिस्थविराधममातृपितॄणां प्रत्येकं कायवाङ्मनोदानैश्चतुर्द्धा विनयः कार्य इत्यभ्युपगमवन्तो द्वात्रिंशदिति । एवं चैतेषां चतुर्णां वादिप्रकाराणां मीलने त्रीणि त्रिषष्ट्यधिकानि अन्यदृष्टिशतानि भवन्त्यत उच्यते–'तिण्ह'मित्यादि, 'वूहं किच'त्ति प्रतिक्षेपं कृत्वा 'स्वसमयो' जैनसिद्धान्तः स्थाप्यते, यत एवं सूत्रकृतेन विधीयते अतस्तत्सूत्रार्थयोः स्वरूपमाह–'नाणे'त्यादि, नाना–अनेकविधाः बहुभिः प्रकारैरित्यर्थः, 'दिट्ठंतवयणनिस्सारं'ति स्याद्वादिना पूर्वपक्षीकृतानां प्रवादिनां स्वपक्षस्थापनाय यानि दृष्टान्तवचनान्युपलक्षणत्वाद्धेतुवचनानि च तदपेक्षया निस्सारं–सारताशून्यं परेषां मतमिति गम्यते, सुष्ठु–पुनरप्रतिक्षेप-

से किं तं ठाणे ?, ठाणेणं ससमया ठाविज्ञन्ति परसमया ठाविज्ञंति ससमयपरसमया ठाविज्ञंति जीवा ठाविज्ञंति अजीवा ठाविज्ञंति जीवाजीवा० लोगा० अलोगा० लोगालोगा ठाविज्ञंति, ठाणेणं दव्वगुणखेत्तकालपज्जव पयत्थाणं–'सेला सलिला य समुद्दा सूरभवणविमाण आगर णदीओ। णिहिओ पुरिसज्जाया सरा य गोत्ता य जोइसंचाला ॥ १ ॥ एक्कविहवत्तव्वयं दुविह जाव दसविहवत्तव्वयं जीवाण पोग्गलाण य लोगट्ठाइं च णं परूवणया आघविज्ञंति, ठाणस्स णं परित्ता वायणा संखेज्ञा- अणुओगदारा संखेज्ञाओ पडिवत्तीओ संखेज्ञा वेढा संखेज्ञा सिलोगा संखेज्ञाओ संगहणीओ, से णं अंगट्ठयाए तइए अंगे एगे सुयक्खंधे दस अज्झयणा एक्कवीसं उद्देसणकाला बावत्तरिं पयसहस्साइं पयग्गेणं प०, संखेज्ञा अक्खरा अणंता पज्जवा परित्ता तसा अणंता थावरा सासया कडा णिबद्धा णिकाइया जिणपण्णत्ता भावा आघविज्ञंति पण्णविज्ञंति परूविज्ञंति निदंसिज्ञंति उवदंसिज्ञंति, से एवं आया एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्ञंति, सेत्तं ठाणे ३ ॥ सूत्रं १३८ ॥

'से किं तं ठाणे'इत्यादि, अथ किं तत् स्थानं ?, तिष्ठन्त्यस्मिन् प्रतिपाद्यतया जीवादय इति स्थानं, तथा चाह—'ठाणेण'मित्यादि, स्थानेन स्थाने वा जीवाः स्थाप्यन्ते यथावस्थितस्वरूपप्रतिपादनायेति हृदयं, शेषं प्रायो निगदसिद्धमेव, नवरं ठाणेण इत्यस्य पुनरुच्चारणं सामान्येनैव पूर्वोक्तस्यैव स्थापनीयविशेषप्रतिपादनाय वाक्यान्तरमिदमिति ज्ञापनार्थं, तत्र 'दव्वगुणखेत्तकालपज्जव'त्ति प्रथमाबहुवचनलोपाद्द्रव्यगुणक्षेत्रकालपर्यवाः पदार्थानां–जीवादीनां स्थानेन स्थाप्यन्ते इति प्रक्रमः, तत्र द्रव्यं द्रव्यार्थता यथा जीवास्तिकायोऽनन्तानि द्रव्याणि गुणः–स्वभावो यथोपयोगस्वभावो जीवः क्षेत्रं–यथा असंख्येयप्रदेशावगाहनोऽसौ, कालो यथा अनाद्यपर्यवसितः, पर्यवाः–कालकृता अवस्था

से किं तं समवाए ?, समवाएणं ससमया सूइज्जंति परसमया सूइज्जंति ससमयपरसमया सूइज्जंति जाव लोगालोगा सूइज्जंति, समवाएणं एकाइयाणं एगट्ठाणं एगुत्तरियपरिवुड्ढीए दुवालसंगस्स य गणिपिडगस्स पल्लवग्गे समणुगाइज्जइ ठाणगसयस्स वारसविहवित्थरस्स सुयणाणस्स जगजीवहियस्स भगवओ समासेणं समोयारे आहिज्जति, तत्थ य णाणाविहप्पगारा जीवाजीवा य वण्णिया वित्थरेण अवरेवि अ वहुविहा विसेसा नरगतिरियमणुअसुरगणाणं आहारुस्सासलेसाआवाससंखआययप्पमाणउववायचवणउग्गहणोवहिवेयणविहाणउवओगजोगइंदियकसाय विविहा य जीवजोणी विक्खंभुस्सेहपरिरयप्पमाणं विहिविसेसा य मंदरादीणं महीधराणं कुलगरतित्थगरगणहराणं सम्मत्तभरहाहिवाण चक्कीणं चेव चक्कहरहलहराण य वासाण य निगमा य समाए एए अण्णे य एवमाइ एत्थ वित्थरेणं अत्था समाहिज्जंति, समवायस्स णं परित्ता वायणा जाव से णं अङ्गट्ठयाए चउत्थे अंगे एगे अज्झयणे एगे सुयक्खंधे एगे उद्देसणकाले एगे चउयाले पदसहस्से पदग्गेणं प०, संखेज्जाणि अक्खराणि जाव चरणकरणपरूवणया आघविज्जंति, सेत्तं समवाए ४ ॥ सूत्रं १३९ ॥

'से किं त'मित्यादि, अथ कोऽसौ समवायः ?, सूत्रेषु प्राकृतत्वेन वकारलोपात् समाये इत्युक्तं, समवायनं समवायः सम्यक् परिच्छेद इत्यर्थः, तद्धेतुश्च ग्रन्थोऽपि समवायः, तथा चाह—समवायेन समवाये वा स्वसमयाः सूच्यन्ते इत्यादि कण्ठ्यं, तथा समवायेन समवाये वा 'एगाइयाणं'ति एकद्वित्रिचतुरादीनां शतान्तानां कोटाकोट्यन्तानां वा 'एगट्ठाणं'ति एके च ते अर्थाश्चेत्येकार्थास्तेषां, अयमर्थः एकेषां केषाञ्चित् न सर्वेषां निखिलानां वक्तुमशक्यत्वादर्थानां—

सिनामभेदोपचारान्नारकाः, ततश्च नारकतिर्यग्मनुजसुरगणानां सम्बन्धिन आहारादयः, तत्र आहारः–ओजआहारादिराभोगिकानाभोगिकस्वरूपोऽनेकधा उच्छ्वासोऽनुसमयादिकालभेदेनानेकधा लेश्या कृष्णादिका पोढा आवाससंख्या यथा नरकावासानां चतुरशीतिर्लक्षाणीत्यादिका आयतप्रमाणमावासानामेव संख्यातासंख्यातयोजनायामता उपलक्षणत्वादस्य विष्कम्भवाहल्यपरिधिमानान्यप्यत्र द्रष्टव्यानि, उपपात एकसमयेनैतावतामेतावता वा कालव्यवधानेनोत्पत्तिः च्यवनमेकसमयेनैतावतामियता वा कालव्यवधानेन मरणं, अवगाहना–शरीरप्रमाणमङ्गुलासंख्येयभागादि अवधिः–अङ्गुलासंख्येयभागक्षेत्रविपयादि वेदना–शुभाशुभस्वभावा विधानानि–भेदा यथा सप्तविधा नारका इत्यादि उपयोगः–आभिनिवोधिकादिर्द्वादशविधः योगः–पञ्चदशविधः इन्द्रियाणि–पञ्च द्रव्यादिभेदाद् विंशतिर्वा श्रोत्रादिच्छिद्राद्यपेक्षयाऽष्टौ वा कपायाः–क्रोधादयः आहारश्चोच्छ्वासश्चेत्यादिर्द्वन्द्वस्ततः कपायशब्दात्प्रथमावहुवचनलोपो द्रष्टव्यः तथा विविधा च जीवयोनिः-सचित्तादिकं जीवानामुत्पत्तिस्थानं, तथा विष्कम्भोत्सेधपरिरयप्रमाणं विधिविशेपाश्च मन्दरादीनां महीधराणामिति, तत्र विष्कम्भो–विस्तार उत्सेधः–उच्चत्वं परिरयः–परिधिः विधिविशेपा इति विधयो–भेदा यथा मन्दरा जम्बूद्वीपीयधातकीखण्डीयपौष्करार्द्धिकभेदात्त्रिधा तद्विशेषस्तु जम्बूद्वीपको लक्षोच्चः शेपास्तु पञ्चाशीतिसहस्रोच्छ्रिता इति, एवमन्येष्वपि भावनीयं, तथा कुलकरतीर्थकरगणधराणां तथा समस्तभरताधिपानां–चक्रिणां चैव तथा चक्रधरहलधराणां च विधिविशेपाः समाश्रीयन्त इति योगः, तथा वर्पाणां

पण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति निदंसिज्जंति उवदंसिज्जंति, से एवं आया से एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं वियाहे ५ ॥ सूत्रं १४० ॥

'से किं तं वियाहे' इत्यादि, अथ केयं व्याख्या ?, व्याख्यायन्ते अर्था यस्यां सा व्याख्या, वियाहे इति च पुँल्लिङ्गनिर्देशः प्राकृतत्वात्, 'वियाहेणं'ति व्याख्यया व्याख्यायां वा ससमया इत्यादीनि नव पदानि सूत्रकृतवर्णके व्याख्यातत्वादिह कण्ठ्यानि, 'वियाहेण'मित्यादि, नानाविधैः सुरैः नरेन्द्रैः राजर्षिभिश्च 'विविहसंसइय'त्ति विविधसंशयितैः—विविधसंशयवद्भिः पृष्टानि यानि तानि तथा तेषां नानाविधसुरनरेन्द्रराजऋषिविविधसंशयितपृष्टानां व्याकरणानां षट्त्रिंशत्सहस्राणां दर्शनात् श्रुतार्था व्याख्यायन्त इति पूर्वापरेण वाक्यसंबन्धः, पुनः किंभूतानां व्याकरणानां ?— 'जिनेने'ति भगवता महावीरेण 'वित्थरेण भासियाणं' विस्तरेण भणितानामित्यर्थः, पुनः किंभूतानां ?—'दव्वे'त्यादि, द्रव्यगुणक्षेत्रकालपर्यवप्रदेशपरिणामावस्थायथास्तिभावाऽनुगमनिक्षेपनयप्रमाणसुनिपुणोपक्रमैर्विविधप्रकारैः प्रकटः प्रदर्शितो यैर्व्याकरणैस्तानि तथा तेषां, तत्र द्रव्याणि—धर्मास्तिकायादीनि गुणा—ज्ञानवर्णादयः क्षेत्रं—आकाशं कालः— समयादिः पर्यवाः—स्वपरभेदभिन्ना धर्माः अथवा कालकृता अवस्था नवपुराणादयः पर्यवाः प्रदेशा-निरंशावयवाः परिणामाः-अवस्थातोऽवस्थान्तरगमनानि यथा—येन प्रकारेणास्तिभावः अस्तित्वं-सत्ता यथाऽस्तिभावं अनुगमः— संहितादिव्याख्यानप्रकाररूपः उद्देशनिर्देशनिर्गमादिद्वारकलापात्मको वा निक्षेपो—नामस्थापनाद्रव्यभावैर्वस्तुनो

तेषां दर्शनात्–प्रकाशनादुपनिवन्धनादित्यर्थः, अथवा तेषा दर्शना–उपदर्शका इत्यर्थः, क इत्याह—'सुतत्थवहुविह-प्पयारे'त्ति श्रुतविषया–अर्थाः श्रुतार्था अभिलाप्यार्थविशेषा इत्यर्थः श्रुता वा आकर्णिता जिनसकाशे गणधरेण ये अर्थास्ते श्रुतार्थाः, अथवा श्रुतमिति सूत्रं अर्था–निर्युक्त्यादय इति श्रुतार्थास्ते च ते वहुविधप्रकाराश्चेतिविग्रहः श्रुतार्थानां वा वहवो विधाः–प्रकारा इति विग्रहः, किमर्थं ते व्याख्यायन्त इत्याह—'शिष्यहितार्थाय' शिष्याणां हितं–अनर्थप्रतिघातार्थप्राप्तिरूपं तदेवार्थः प्रार्थ्यमानत्वात्तस्य तस्मै इति, किंभूतास्ते अत आह—गुणहस्ता–गुण एवार्थप्राप्त्यादिलक्षणो हस्त इव हस्तः प्रधानावयवो येषां ते तथा (गुणमहत्था–गुणोत्सवार्थाः), 'वियाहस्से'त्यादि तु निगमनान्तं सूत्रसिद्धं, नवरं शतमिहाध्ययनस्य संज्ञा, चतुरशीतिः पदसहस्राणि पदाग्रेणेति समवायापेक्षया द्विगुणताया इहानाश्रयणादन्यथा तद्विगुणत्वे द्वे लक्षे अष्टाशीतिः सहस्राणि च भवन्तीति ॥ ५ ॥

से किं तं णायाधम्मकहाओ ?, णायाधम्मकहासु णं णायाणं णगराइं उज्जाणाइं चेइआइं वणखंडा रायाणो ५ अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोइयपरलोइअइड्ढीविसेसा १० भोगपरिच्चाया पव्वज्जाओ सुयपरिग्गहातवोवहाणाइं परियागा १५ संलेहणाओ भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायायाइं २० पुणवोहिलाभा अंतकिरियाओ २२ य आवविज्जंतिजाव नायाधम्मकहासु णं पव्वइयाणं विणयकरणजिणसामिसासणवरे संजमपइण्णपालणधिइमइववसायदुब्बलाणं १ तवनियमतवोवहाणरणदुद्धरभरभग्गयणिस्सहयणिसिट्ठाणं २ घोरपरीसहपराजियाणं सहपारद्धरुद्धसिद्धालयमग्गनिग्गयाणं ३ विसयसुहतु-

कथाश्च ज्ञाताधर्मकथाः, तत्र प्रथमं व्युत्पत्त्यर्थं सूत्रकारो दर्शयन्नाह—'नायाधम्मकहासु ण'मित्यादि, ज्ञाताना—उदाहरणभूतानां मेघकुमारादीनां नगरादीन्याख्यायन्ते, नगरादीनि द्वाविंशतिः पदानि कण्ठ्यानि च, नवरमुद्यानं—पत्रपुष्पफलच्छायोपगतवृक्षोपशोभितं विविधवेपोन्नतमानश्च वहुजनो यत्र भोजनार्थं यातीति, चैत्यं—व्यन्तरायतनं, वनखण्डोऽनेकजातीयैरुत्तमैर्वृक्षैरुपशोभित इति, 'आघविज्जंति' इह यावत्करणादन्यानि पंच पदानि दृश्यानि यावदयं सूत्रावयवो यथा 'नायाधम्मे'त्यादि, तत्र ज्ञाताधर्मकथासु णमित्यलङ्कारे प्रव्रजितानां, क ?—'विनयकरणजिनस्वामिशासनवरे' कर्म्मविनयकरे जिननाथसम्बन्धिनि शेपप्रवचनापेक्षया प्रधाने प्रवचने इत्यर्थः, पाठान्तरेण 'समणाणं विणयकरणजिणसासणंमि पवरे' किंभूतानां ?—संयमप्रतिज्ञा—संयमाभ्युपगमः सैव दुरधिगम्यत्वात् कातरनरक्षोभकत्वाद्गम्भीरत्वाच्च पातालमिव पातालं तत्र धृतमतिव्यवसाया दुर्लभा येपां ते तथा, पाठान्तरेण संयमप्रतिज्ञापालने ये धृतिमतिव्यवसायास्तेपु दुर्वला ये ते तथा तेपां, तत्र धृतिः—चित्तस्वास्थ्यं मतिः—बुद्धिर्व्यवसायः—अनुष्ठानोत्साह इति, तथा तपसि नियमः—अवश्यकरणं तपोनियमो नियन्त्रितं तपः स च तप उपधानं चानियन्त्रितं तप एव श्रुतोपचारः तपोनियमतपउपधाने ते एव रणश्च—कातरजनक्षोभकत्वात् सङ्ग्रामो 'दुद्धरभर'त्ति श्रमकारणत्वाद्दुर्द्धरभरश्च—दुर्वहलोहादिभारस्ताभ्यां भग्ना इति(एव)—भग्नकाः—पराङ्मुखीभूतास्तथा 'निस्सहगनिसट्ठाणं'ति निःसहा—नितरामशक्तास्त एव निःसहका निसृष्टाश्च—निसृष्टाङ्गा मुक्ताङ्गा ये ते तपोनियमतपउपधानरणदुर्धरभरभग्नकनिःसहकनिसृष्टाः, पाठान्त-

प्रपञ्चाः, आख्यायन्ते इति पूर्वेण योगः, तथा धीराणां च-महासत्त्वानां, किंभूतानां ?-जितं परीषहकषायसैन्यं यैस्ते तथा, धृतेः-मनःस्वास्थ्यस्य धनिकाः-स्वामिनो धृतिधनिकाः, तथा संयमे उत्साहो-वीर्यं निश्चितः-अवश्यंभावी येषां(ते)संयमोत्साहनिश्चितास्ततः पदत्रयस्य कर्मधारयोऽतस्तेषां जितपरीषहकषायसैन्यधृतिधनिकसंयमोत्साहनिश्चितानां, तथा आराधिता ज्ञानदर्शनचारित्रयोगा यैस्ते तथा निःशल्यो-मिथ्यादर्शनादिशल्यरहितः शुद्धश्च-अतीचारविमुक्तो यः सिद्धालयस्य-सिद्धेर्यो(ः)मार्गस्तस्याभिमुखा ये ते तथा ततः पदद्वयस्य कर्मधारयःअतस्तेषामाराधितज्ञानदर्शनचारित्रयोगनिःशल्यशुद्धसिद्धालयमार्गाभिमुखानां, किमत आह-सुरभवने-देवतयोत्पादे यानि विमानसौख्यानि तानि सुरभवनविमानसौख्यानि अनुपमानि ज्ञाताधर्मकथास्वाख्यायन्त इति प्रक्रमः, इह च भवनशब्देन भवनपतिभवनानि न व्याख्यातान्यविराधितसंयमप्रव्रजितप्रस्तावात्, ते हि भवनपतिषु नोत्पद्यन्त इति, तथा भुक्त्वा चिरं च भोगभोगान्-मनोज्ञशब्दादीन् तांस्तथाविधान् दिव्यान्-स्वर्गभवान् 'महार्हान्' महतः-आत्यन्तिकान् अर्हान्-प्रशस्ततया पूज्यानिति भावः, ततश्च-देवलोकात् कालक्रमच्युतानां यथा पुनर्लब्धसिद्धिमार्गाणां-मनुजगताववाप्तज्ञानादीनामन्तक्रिया-मोक्षो भवति तथाऽऽख्यायन्त इति प्रक्रमः, तथा चलितानां च-कथञ्चित्कर्मवशतः परीषहादावधीरतया संयमप्रतिज्ञायाः प्रभ्रष्टानां सह देवैर्मानुषाः सदेवमानुषास्तेषां सम्बन्धीनि धीरकरणे-धीरत्वोत्पादने यानि कारणानि-ज्ञातानि तानि सदेवमानुषधीरकरणकारणानि आख्यायन्त इति प्रक्रमः, इयमत्र भावना-यथा आर्याषाढो देवेन धीरीकृतो यथा वा

श्वार्थाधिकारसमूहात्मकान्यध्ययनान्येव दश वर्गा द्रष्टव्याः, तत्र ज्ञातेष्वादिमानि दश यानि तानि ज्ञातान्येव, न ते- ष्वाख्यायिकादिसम्भवः, शेषाणि नव ज्ञातानि, तेषु पुनरेकैकस्मिन् पञ्च पञ्च चत्वारिंशदधिकानि आख्यायिकाश- तानि, तत्राप्येकैकस्यामाख्यायिकायां पञ्च पञ्चोपाख्यायिकाशतानि, तत्राप्येकैकस्यामुपाख्यायिकायां पञ्च पञ्चाख्या- यिकोपाख्यायिकाशतानि, एवमेतानि संपिण्डितानि किं सञ्जातं ?—'इगवीसं कोडिसयं लक्खा पण्णासमेव बोद्धव्वा । १२१५०००००० । एवं ठिए समाणे अहिगयसुत्तस्स पत्थारो ॥ १ ॥' तद्यथा 'दस धम्मकहाणं वग्गा, तत्थ णं एगमेगाए धम्मकहाए पञ्च पञ्च अक्खाइयासयाइं एगमेगाए अक्खाइयाए पञ्च पञ्चउवक्खाइयासयाइं एगमेगाए उवक्खाइयाए पञ्च पञ्च अक्खाइउवक्खाइयासयाइं'ति, एवमेतानि सम्पिण्डितानि किं संजातं ?—'पणवीसं कोडिसयं १२५००००००० एत्थ य समलक्खणाइया जम्हा । नवनायसंबद्धा अक्खाइयमाइया तेणं ॥ १ ॥ ते सोहिज्जंति फुडं इमाउ रासीओ वेगलाणं तु । पुणरुत्तवज्जियाणं पमाणमेयं विणिदिट्ठं ॥२॥' शोधिते चैतस्मिन् सति अर्द्धचतुर्था एव कथानककोट्यो भवन्तीति, अत एवाह—'एवमेव सपुव्वावरेणं'ति भणितप्रकारेण गुणनशोधने कृते सतीत्युक्तं भवति 'अद्धुट्ठाओ अक्खाइयाकोडीओ भवन्तीतिमक्खाओ'त्ति आख्यायिकाः—कथानकानि एता-एवमेतत्संख्या भवन्तीति- कृत्वा आख्याता भगवता महावीरेणेति, तथा संख्यातानि 'पदसयसहस्साणी'ति किल पञ्च लक्षाणि पट्सप्ततिश्च सहस्राणि पदाग्रेण अथवा सूत्रालापकपदाग्रेण संख्यातान्येव पदसहस्राणि भवन्तीत्येवं सर्वत्र भावयितव्यमिति ॥ ६ ॥

राजानः अम्बापितरौ समवसरणानि धर्माचार्या धर्मकथा ऐहलौकिकपारलौकिका ऋद्धिविशेषा उपासकानां च शीलव्रतविरमणगुणप्रत्याख्यानपौषधोपवासप्रतिपादनताः, तत्र शीलव्रतानि–अणुव्रतानि विरमणानि–रागादिविरतयः गुणा–गुणव्रतानि प्रत्याख्यानानि–नमस्कारसहितादीनि पौषधः–अष्टम्यादिपर्वदिनं तत्रोपवसनमाहारशरीरसत्कारादित्यागः पौषधोपवासः, ततो द्वन्द्वे सत्येतेषां प्रतिपादनताः–प्रतिपत्तय इति विग्रहः, श्रुतपरिग्रहास्तपउपधानानि प्रतीतानि 'पडिमाओ'त्ति एकादश उपासकप्रतिमाः कायोत्सर्गा वा उपसर्गा–देवादिकृतोपद्रवाः संलेखना–भक्तपानप्रत्याख्यानानि, पादपोपगमनानि देवलोकगमनानि सुकुलप्रत्यायातिः पुनर्बोधिलाभोऽन्तक्रिया चाख्यायन्ते पूर्वोक्तमेवेतो विशेषत आह—'उवासगे'त्यादि, तत्र ऋद्धिविशेषा–अनेककोटीसंख्यद्रव्यादिसम्पद्विशेषाः तथा परिषदः–परिवारविशेषा यथा मातापितृपुत्रादिका अभ्यन्तरपरिषत् दासीदासमित्रादिका बाह्यपरिषदिति, विस्तरधर्मश्रवणानि महावीरसन्निधौ, ततो बोधिलाभोऽभिगमः–सम्यक्त्वस्य विशुद्धता स्थिरत्वं–सम्यक्त्वशुद्धिरेव मुलगूणोत्तरगुणा–अणुव्रतादयः अतिचारास्तेषामेव–वधबन्धादितः खण्डनानि स्थितिविशेषाश्च–उपासकपर्यायस्य कालमानभेदाश्च बहुविशेषाः प्रतिमाः–प्रभूतभेदाः सम्यग्दर्शनादिप्रतिमाः अभिग्रहग्रहणानि तेषामेव च पालनानि उपसर्गाधिसहनानि निरुपसर्गश्च–उपसर्गाभावश्चेत्यर्थः, तपांसि च विचित्राणि शीलव्रतादयोऽनन्तरोक्तरूपा अपश्चिमाः–

क्खयम्मि जह केवलस्स लंभो परियाओ जत्तिओ य जह पालिओ मुणिहिं पायोवगओ य जो जहिं जत्तियाणि भत्ताणि छेअइत्ता अंतगडो मुनिवरो तमरयोघविप्पमुक्को मोक्खसुहमणंतरं च पत्ता एए अन्ने य एवमाइअत्था वित्थारेणं परूवेई, अंतगडदसासु णं परित्ता वायणा संखेज्ञा अणुओगदारा जाव संखेज्ञाओ संगहणीओ, जाव से णं अगट्ठयाए अट्ठमे अंगे एगे सुयक्खंधे दस अज्झयणा सत्त वग्गा दस उद्देसणकाला दस समुद्देसणकाला संखेज्ञाइं पयसहस्साइं पयग्गेणं पण्णत्ता संखेज्ञा अक्खरा जाव एवं चरणकरणपरूवणया आघविज्ञंति, सेत्तं अंतगडदसाओ ॥ ८ ॥ ( सूत्रं १४३ )

'से किं त'मित्यादि, अथ कास्ता अन्तकृद्दशाः ?, तत्रान्तो-विनाशः, स च कर्म्मणस्तत्फलस्य वा संसारस्य कृतो यैस्ते अन्तकृतास्ते च तीर्थकरादयस्तेषा दशाः-प्रथमवर्गे दशाध्ययनानीति तत्संख्यया अन्तकृतदशाः, तथा चाह— 'अंतगडदसासु ण'मित्यादि कण्ठ्यं, नवरं नगरादीनि चतुर्दश पदानि षष्ठाङ्गवर्णकाभिहितान्येव, तथा 'पडिमाओ'त्ति द्वादश भिक्षुप्रतिमा मासिक्यादयो वहुविधाः तथा क्षमा मार्दवं आर्जवं च शौचं च सत्यसहितं, तत्र शौचं-परद्रव्यापहारमालिन्याभावलक्षणं सप्तदशविधश्च संयम उत्तमं च ब्रह्म-मैथुनविरतिरूपं 'आकिंचणिय'त्ति आकिञ्चन्यं तपस्त्याग इति-आगमोक्तं दानं समितयो गुप्तयश्चैव तथा अप्रमादयोगः स्वाध्यायध्यानयोश्च उत्तमयोर्द्वयोरपि लक्षणानि-स्वरूपाणि, तत्र स्वाध्यायस्य लक्षणं 'सज्झाएण पसत्थं झाण'मित्यादि, ध्यानलक्षणं यथा-"अंतोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुंमी"त्यादि, व्याख्यायन्त इति सर्वत्र योगः, तथा प्राप्तानां च संयमोत्तमं-सर्वविरतिं जितपरीषहाणां चतुर्विधक-

याओ य आघविज्जंति, अणुत्तरोववाइयदसासु णं तित्थकरसमोसरणाइं परमंगलजगहियाणि जिणातिसेसा य बहुविसेसा जिणसीसाणं चेव समणगणपवरगंधहत्थीणं थिरजसाणं परिसहसेण्णरिउबलपमद्दणाणं तवदित्तचरित्तणाणसम्मत्तसारविविहप्पगारवित्थरपसत्थगुणसंजुयाणं अणगारमहरिसीणं अणगारगुणाण वण्णओ उत्तमवरतवविसिट्ठणाणजोगजुत्ताणं जह य जगहियं भगवओ जारिसा इड्ढिविसेसा देवासुरमाणुसाणं परिसाणं पाउब्भावा य जिणसमीवं जह य उवासंति जिणवरं जह य परिकहंति धम्मं लोगगुरू अमरनरसुरगणाणं सोऊण य तस्स भासियं अवसेसकम्मविसयविरत्ता नरा जहा अब्भुवेंति धम्ममुरालं संजमं तवं चावि बहुविहप्पगारं जह बहूणि वासाणि अणुचरित्ता आराहियनाणदंसणचरित्तजोगा जिणवयणमणुगयमहियं भासित्ता जिणवराण हियएण मणुण्णेत्ता जे य जहिं जत्तियाणि भत्ताणि छेअइत्ता लद्धूण य समाहिमुत्तमज्झाणजोगजुत्ता उववन्ना मुणिवरोत्तमा जह अणुत्तरेसु पावंति जह अणुत्तरं तत्थ विसयसोक्खं तओ य चुआ कमेण काहिंति संजया जहा य अंतकिरियं एए अन्ने य एवमाइअत्था वित्थरेण, अणुत्तरोववाइयदसासु णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ संगहणीओ, से णं अंगट्ठयाए नवमे अंगे एगे सुयक्खंधे दस अज्झयणा तिन्नि वग्गा दस उद्देसणकाला दस समुद्देसणकाला संखेज्जाइं पयसयसहस्साइं पयग्गेणं प०, संखेज्जाणि अक्खराणि जाव एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं अणुत्तरोववाइयदसाओ ॥ ९ ॥ ( सूत्रं १४४ )

'से किं त'मित्यादि, नास्मादुत्तरो विद्यते इत्यनुत्तर उपपतनमुपपातो जन्मेत्यर्थः अनुत्तरः—प्रधानः संसारे अन्यस्य तथाविधस्याभावादुपपातो येषां ते तथा त एवानुत्तरोपपातिकाः, तद्वक्तव्यताप्रतिबद्धा दशा—दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशाः, तथा चाह—'अणुत्तरोववाइयदसासु ण'मित्यादि, तत्रानुत्तरोपपातिकानामिति—साधूनां

भवनपतिव्यन्तराणां राजादिमनुजानां च अथवा अनुत्तरोपपातिकसाधूनां ऋद्धिविशेषा देवादिसम्बन्धिनस्तादृशा आख्यायन्त इति क्रियायोगः, तथा पर्षदां च 'संजयवेमाणित्थी संजइ पुव्वेण पविसिउं वीर'मित्यादिनोक्तस्वरूपाणां प्रादुर्भावाश्च–आगमनानि, क्व ?–'जिणसमीवं'ति जिनसमीपे यथा–येन च प्रकारेण पञ्चविधाभिगमादिना उपासते–सेवन्ते राजादयो जिनवरं तथाऽऽख्यायत इति योगः, यथा च परिकथयति धर्म्मं लोकगुरुरिति–जिनवरोऽमरनरासुरगणानां, श्रुत्वा च तस्येति–जिनवरस्य भाषितं अवशेषाणि क्षीणप्रायाणि कर्म्माणि येषां ते तथा ते च ते विषयविरक्ताश्चेति अवशेषकर्मविषयविरक्ताः, के ?–नराः, किं ?–यथा अभ्युपयन्ति धर्म्ममुदारं, किंस्वरूपमत आह—संयमं तपश्चापि, किम्भूतमित्याह—बहुविधप्रकारं, तथा यथा बहूनि वर्षाणि 'अणुचरित्त'त्ति अनुचर्य आसेव्य संयमं तपश्चेति वर्त्तते, तत आराधितज्ञानदर्शनचारित्रयोगास्तथा 'जिणवयणमणुगयमहियभासिय'त्ति जिनवचनं–आचारादि अनुगतं–सम्बद्धं नार्द्दवितर्दमित्यर्थः महितं–पूजितमधिकं वा भाषितं यैरध्यापनादिना ते तथा, पाठान्तरे जिनवचनमनुगत्या–आनुकूल्येन सुष्ठु भाषितं यैस्ते जिनवचनानुगतिसुभाषिताः, तथा 'जिणवराण हियएणमणुण्णेत्त'त्ति इति षष्ठी द्वितीयार्थे तेन जिनवरान् हृदयेन–मनसा अनुनीय–प्राप्य ध्यात्वेतियावत्, ये च यत्र यावन्ति च भक्तानि छेदयित्वा लब्ध्वा च समाधिमुत्तमं ध्यानयोगयुक्ताः उपपन्ना मुनिवरोत्तमा यथा अनुत्तरेषु तथा आख्यायन्त इति प्रक्रमः, तथा प्राप्नुवन्ति यथाऽनुत्तरं 'तत्थ'त्ति अनुत्तरविमानेषु विषयसुखं तथाऽऽख्यायन्ते इति योगः, 'तत्तो य'त्ति अनुत्त-

'से किं त'मित्यादि, प्रश्नः—प्रतीतस्तन्निर्वचनं—व्याकरणं प्रश्नानां च व्याकरणानां च योगात्प्रश्नव्याकरणानि तेषु 'अट्ठुत्तरं पसिणसयं' तत्राङ्गुष्ठबाहुप्रश्नादिका मन्त्रविद्याः प्रश्ना या पुनर्विद्या मन्त्रविधिना जप्यमाना अपृष्टा एव शुभाशुभं कथयन्ति एताः अप्रश्नाः तथाऽङ्गुष्ठादिप्रश्नभावं तदभावं च प्रतीत्य या विद्याः शुभाशुभं कथयन्ति ताः प्रश्नाप्रश्नाः 'विज्जाइसय'त्ति तथा अन्ये विद्यातिशयाः स्तम्भस्तोभवशीकरणविद्वेषीकरणोच्चाटनादयः नागसुपर्णैश्च सह-भवनपतिविशेषैरुपलक्षणत्वाद्यक्षादिभिश्च सह साधकस्येति गम्यते दिव्याः—तात्त्विकाः संवादाः—शुभाशुभगताः संलापाः आख्यायन्ते, एतदेव प्रायः प्रपञ्चयन्नाह—'पण्हावागरणदसे'त्यादि, स्वसमयपरसमयप्रज्ञापका ये प्रत्येकबुद्धास्तैः करकण्ड्वादिसदृशैर्विविधार्था यका भाषा गम्भीरेत्यर्थः तया भाषिताः—गदिताः स्वसमयपरसमयप्रज्ञापकप्रत्येकबुद्धविविधार्थभाषाभाषितास्तासां, किम् ?—आदर्शाङ्गुष्ठादीनां सम्बन्धिनां प्रश्नानां विविधगुणमहार्थाः प्रश्नव्याकरणदशास्वाख्यायन्त इति योगः, पुनः किम्भूतानां प्रश्नानां ?—'अइसयगुणउवसमनाणप्पगारआयरियभासियाणं'ति अतिशयाश्च—आमर्पौषध्यादयो गुणाश्च—ज्ञानादय उपशमश्च—स्वपरभेदः एते नानाप्रकारा येषां ते तथा ते च ते आचार्याश्च तैर्भाषिता यास्तास्तथा तासां, कथं भाषितानामित्याह—'वित्थरेणं'ति विस्तरेण—महता वचनसन्दर्भेण तथा स्थिरमहर्षिभिः पाठान्तरे वीरमहर्षिभिः 'विविहवित्थरभासियाणं च'त्ति विविधविस्तरेण भाषितानां च, चकारस्तृतीयप्रणायकभेदसमुच्चयार्थः, पुनः कथंभूतानां प्रश्नानां ?—'जगहियाणं'ति जगद्धितानां पुरुषार्थोपयोगित्वात्, किंसम्बन्धिनीनामित्याह—

प्रवचनतत्त्वमित्यर्थः, तस्य अबुधजनविबोधनकरस्य एकान्तहितस्येति भावः 'पच्चक्खयपच्चयकराणं'ति प्रत्यक्षकेन—ज्ञानेन साक्षादित्यर्थो यः प्रत्ययः—सर्वातिशयनिधानमतीन्द्रियार्थोपदर्शनाव्यभिचारि चेदं जिनप्रवचनमित्येवंरूपा प्रतिपत्तिः अथवा प्रत्यक्षेणेवानेनार्थाः प्रतीयन्त इति प्रत्यक्षमिवेदमित्येवं प्रत्ययः प्रत्यक्षकप्रत्ययस्तत्करणशीलाः—प्रत्यक्षकप्रत्ययकार्यः प्रत्यक्षताप्रत्ययकार्यो वा तासां प्रत्यक्षकप्रत्ययकारीणां प्रत्यक्षताप्रत्ययकारीणां वा, कासामित्याह—प्रश्नानां—प्रश्नविद्यानां उपलक्षणत्वादन्यासां च यासामष्टोत्तरशतान्यादौ प्रतिपादितानि, विविधगुणा—बहुविधप्रभावास्ते च ते महार्थाश्च—महान्तोऽभिधेयाः—पदार्थाः शुभाशुभसूचनादयो विविधगुणमहार्थाः, किंभूता ?—जिनवरप्रणीताः, किमित्याह—'आघविज्जंति'त्ति आख्यायन्ते शेषं पूर्ववत्, नवरं 'पणयालीस'मित्यादि यद्यपीहाध्ययनानां दशत्वाद्दशैवोद्देशनकाला भवन्ति तथापि वाचनान्तरापेक्षया पञ्चचत्वारिंशदिति सम्भाव्यते इति 'पणयालीस'मित्याद्यविरुद्धमिति, 'संखेज्जाणि पयसयसहस्साणि पयग्गेणं'ति तानि च किल द्विनवतिर्लक्षाणि षोडश च सहस्राणीति ॥ १० ॥

से किं तं विवागसुयं ?, विवागसुए णं सुक्कडदुक्कडाणं कम्माणं फलविवागे आघविज्जंति, से समासओ दुविहे पण्णत्ते, तंजहा—दुहविवागे चेव सुहविवागे चेव, तत्थ णं दस दुहविवागाणि दस सुहविवागाणि, से किं तं दुहविवागाणि ?, दुहविवागेसु णं दुहविवागाणं नगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ नगरगमणाइं संसारपबंधे दुहपरंपराओ य आघविज्जंति, सेत्तं दुहविवागाणि । से किं तं सुहविवागाणि ?, सुहविवागेसु सुहविवागाणं णगराइं उज्जाणाइं

वरयपरंपराणुवद्धा असुभाणं सुभाणं चेव कम्माणं भासिआ बहुविहा विवागा विवागसुयम्मि भगवया जिणवरेण संवेगकारणत्था अन्नेवि य एवमाइया बहुविहा वित्थरेणं अत्थपरूवणया आघविज्जंति, विवागसुअस्स णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संखेज्जाओ संगहणीओ, से णं अंगट्ठयाए एक्कारसमे अंगे वीसं अज्झयणा वीसं उद्देसणकाला वीसं समुद्देसणकाला, संखेज्जाइं पयसयसहस्साइं पयग्गेणं प०, संखेज्जाणि अक्खराणि अणंता गमा अणंता पज्जवा जाव एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं विवागसुए ॥ ११ ॥ ( सूत्रं १४६ )

'से किं त'मित्यादि, विपचनं विपाकः—शुभाशुभकर्मपरिणामस्तत्प्रतिपादकं श्रुतं विपाकश्रुतं 'विवागसुए ण'मित्यादि कण्ठ्यं, नवरं 'फलविपाके'ति फलरूपो विपाकः फलविपाकः तथा 'नगरगमणाइं'ति भगवतो गौतमस्य भिक्षाद्यर्थं नगरप्रवेशनानीति, एतदेव पूर्वोक्तं प्रपञ्चयन्नाह—'दुहविवागेसु ण'मित्यादि, तत्र प्राणातिपातालीकवचनचौर्यकरणपरदारमैथुनैः सह 'ससंगयाए'त्ति या ससङ्गता—सपरिग्रहता तया संचितानां कर्म्मणामिति योगः, महातीव्रकपायेन्द्रियप्रमादपापप्रयोगाशुभाध्यवसायसञ्चितानां कर्मणां पापकानां पापानुभागा—अशुभरसा ये फलविपाका—विपाकोदयास्ते तथा ते आख्यायन्त इति योगः, केपामित्याह—निरयगतौ तिर्यग्योनौ च ये बहुविधव्यसनशतपरम्पराभिः प्रबद्धाः ते तथा तेपां, जीवानामिति गम्यते, तथा 'मणुयत्ते'त्ति मनुजत्वेऽप्यागतानां यथा पापकर्मशेपेण पापका भवन्ति फलविपाका अशुभा विपाकोदया इत्यर्थः, तथा आख्यायन्ते इति प्रकृतं, तथाहि—वधो—यष्ट्यादिताडनं वृपणविनाशो—वर्द्धितककरणं तथा नासायाश्च कर्णयोश्च ओष्ठस्य चाङ्गुष्ठानां च करयोश्च चरणयोश्च नखानां

वद्धा—निष्पीडिता कच्छा—ब्रन्धविशेषो यत्र तत्तथा तेन, धृतिवलयुक्तेनेत्यर्थः, शोधनं—अपनयनं तस्य कर्म्मविशेषस्य 'घावि'त्ति सम्भावनायां 'होज्जा' सम्पद्येत नान्यो मोक्षोपायोऽस्तीति भावः, 'एत्तो ये'त्यादि इतश्चानन्तरं सुखविपाकेषु द्वितीयश्रुतस्कन्धाध्ययनेष्वित्यर्थः यदाख्यायते तदभिधीयत इति शेषः, शीलं—ब्रह्मचर्यं समाधिर्वा संयमः—प्राणातिपातविरतिर्नियमा—अभिग्रहविशेषाः गुणाः—शेषमूलगुणाः उत्तरगुणाश्च तपोऽनशनादि एतेषामुपधानं—विधानं येषां ते तथा अतस्तेषु शीलसंयमनियमगुणतपउपधानेषु, केष्वित्याह—साधुषु—यतिषु, किम्भूतेषु ?—सुट्ठु विहितं—अनुष्ठितं येषां ते सुविहितास्तेषु भक्तादि दत्त्वा यथा बोधिलाभादि निर्वर्त्तयन्ति तथेहाख्यायत इति सम्बन्धः, इह च सम्प्रदानेऽपि सप्तमी न दुष्टा, विषयस्य विवक्षणात्, अनुकम्पा—अनुक्रोशस्तत्प्रधान आशयः—चित्तं तस्य प्रयोगो—व्यापृत्तिरनुकम्पाशयप्रयोगस्तेन, तथा 'तिकालमति'त्ति त्रिषु कालेषु या मतिः—बुद्धिर्यदुत दास्यामीति परितोषो दीयमाने परितोषो दत्ते च परितोष इति सा त्रैकालिमतिस्तया च यानि विशुद्धानि तानि तथा तानि च तानि भक्तपानानि चेति अनुकम्पाशयप्रयोगत्रिकालमतिविशुद्धभक्तपानानि प्रदायेति क्रियायोगः, केन प्रदायेत्याह—प्रयतमनसा—आदरभूतचेतसा, हितोऽनर्थपरिहाररूपत्वात् सुखहेतुत्वात् सुखः शुभो वा 'नीसेस'त्ति निःश्रेयसः कल्याणकरत्वात् तीव्रः—प्रकृष्टः परिणामः—अध्यवसानं यस्याः सा तथा सा निश्चिता—असंशया मतिः—बुद्धिर्येषां ते हितसुखनिःश्रेयसतीव्रपरिणामनिश्चितमतयः किं ?—'पयच्छिऊणं'ति प्रदाय, किंभूतानि भक्तपानानि ?—प्रयोगेषु शुद्धानि दाय-

दीर्घत्वं च एवं वपुः–शरीरं तस्य स्थिरसंहननता वर्णस्योदारगौरत्वं रूपस्यातिसुन्दरता जातेरुत्तमत्वं कुलस्याप्येवं जन्मनो विशिष्टक्षेत्रकालौ निरावाधत्वं आरोग्यस्य प्रकर्षः बुद्धिरौत्पत्तिक्यादिका तस्याः प्रकृष्टता मेधा अपूर्वश्रुतग्रहणशक्तिस्तस्या विशेषः प्रकृष्टतैवेति, तथा मित्रजनः–सुहृल्लोकः स्वजनः–पितृपितृव्यादिः धनधान्यरूपो यो विभवो–लक्ष्मीः स धनधान्यविभवस्तथा समृद्धेः–पुरान्तःपुरकोशकोष्ठागारवलवाहनरूपायाः सम्पदो यानि साराणि–प्रधानानि वस्तूनि तेषां यः समुदयः–समूहः स तथा इत्येतेषां द्वन्द्वस्तत एषां ये विशेषाः–प्रकर्षास्ते तथा, तथा बहुविधकामभोगोद्भवानां सौख्यानां विशेषा इतीहापि सम्बन्धनीयं, शुभविपाक उत्तमो येषां ते शुभविपाकोत्तमास्तेषु जीवेष्विति गम्यं, इह चेयं षष्ठ्यर्थे सप्तमी, तेन शुभविपाकाध्ययनवाच्यानां साधूनामायुष्कादिविशेषाः शुभविपाकाध्ययनेष्वाख्यायन्ते इति प्रकृतं, अथ प्रत्येकं श्रुतस्कन्धयोरभिधेये पुण्यपापविपाकरूपे प्रतिपाद्य तयोरेव यौगपद्येन ते आह–'अणुवरये'त्यादि, अनुपरता–अविच्छिन्ना ये परम्परानुबद्धाः–पारम्पर्यप्रतिबद्धाः, के ?–विपाका इति योगः, केषां ?–अशुभानां शुभानां चैव कर्मणां प्रथमद्वितीयश्रुतस्कन्धयोः क्रमेणैव च भाषिताः–उक्ता बहुविधा विपाकाः विपाकश्रुते एकादशाङ्गे भगवता जिनवरेण संवेगकारणार्थाः–संवेगहेतवो भावाः अन्येऽपि चैवमादिका आख्यायन्त इति पूर्वोक्तक्रियया वचनपरिणामाद्वोत्तरक्रियया योगः, एवं च बहुविधा विस्तरेणार्थप्ररूपणता आ-

आइं वावीसं सुत्ताइं चउक्कणइयाइं ससमयसुत्तपरिवाडीए, एवामेव सपुव्वावरेणं अट्ठासीति सुत्ताइं भवंतीतिमक्खयाइं, सेत्तं सुत्ताइं। से किं तं पुव्वगयं ?, पुव्वगयं चउद्दसविहं पन्नत्तं, तंजहा—उप्पायपुव्वं अग्गेणीयं वीरियं अत्थिणत्थिप्पवायं नाणप्पवायं सच्चप्पवायं आयप्पवायं कम्मप्पवायं पच्चक्खाणप्पवायं विज्जाणुप्पवायं अवंझ० पाणाऊ० किरियाविसालं लोगबिंदुसारं १४, उप्पायपुव्वस्स णं दस वत्थू प० चत्तारि चूलियावत्थू प०, अग्गेणियस्स णं पुव्वस्स चोद्दस वत्थू वारस चूलियावत्थू, वीरियपवायस्स णं पुव्वस्स अट्ठ वत्थू अट्ठ चूलियावत्थू प०, अत्थिणत्थिप्पवायस्स णं पुव्वस्स अट्ठारस वत्थू दस चूलियावत्थू प०, नाणप्पवायस्स णं पुव्वस्स वारस वत्थू प०, सच्चप्पवायस्स णं पुव्वस्स दो वत्थू प०, आयप्पवायस्स णं पुव्वस्स सोलस वत्थू प०, कम्मप्पवायपुव्वस्स तीसं वत्थू प०, पच्चक्खाणस्स णं पुव्वस्स वीसं वत्थू प०, विज्जाणुप्पवायस्स णं पुव्वस्स पनरस वत्थू प०, अवंझस्स णं पुव्वस्स वारस वत्थू प०, पाणाउस्स णं पुव्वस्स तेरस वत्थू प०, किरियाविसालस्स णं पुव्वस्स तीसं वत्थू प०, लोगबिंदुसारस्स णं पुव्वस्स पणवीसं वत्थू प०,—दस चोद्दस अट्ठट्ठारसे व वारस दुवे य वत्थूणि। सोलस तीसा वीसा पन्नरस अणुप्पवायंमि ॥ १ ॥ वारस एक्कारसमे वारसमे तेरसेव वत्थूणि। तीसा पुण तेरसमे चउदसमे पन्नवीसाओ ॥ २ ॥ चत्तारि दुवालस अट्ठ चेव दस चेव चूलवत्थूणि। आतिल्लाण चउण्हं सेसाणं चूलिया णत्थि ॥ ३ ॥ सेत्तं पुव्वगयं, से किं तं अणुओगे ?, अणुओगे दुविहे पन्नत्ते, तंजहा—मूलपढमाणुओगे य गंडियाणुओगे य, से किं तं मूलपढमाणुओगे ?, एत्थ णं अरहंताणं भगवंताणं पुव्वभवा देवलोगगमणाणि आउं चवणाणि जम्मणाणि अ अभिसेया रायवरसिरीओ सीयाओ पव्वज्जाओ तवा य भत्ता केवलणाणुप्पाया अ तित्थपवत्तणाणि अ संघयणं संठाणं उच्चत्तं आउं वन्नविभागो सीसा गणा गणहरा य अज्जा पवत्तणीओ संघस्स चउव्विहस्स जं वावि

सर्वनयदृष्टय एवेहाख्यायन्त इत्यर्थः, तथा चाह—'दिट्ठिवाए ण'मित्यादि, दृष्टिवादेन दृष्टिपातेन वा सर्वभावप्ररूपणाऽऽख्यायते, 'से समासओ पंचविहे' इत्यादि सर्वमिदं प्रायो व्यवच्छिन्नं तथापि यथादृष्टं किमपि लिख्यते, तत्र सूत्रादिग्रहणयोग्यतासम्पादनसमर्थानि परिकर्म्माणि गणितपरिकर्मवत्, तच्च परिकर्म्मश्रुतं सिद्धश्रेणिकादिपरिकर्म्ममूलभेदतः सप्तविधं, उत्तरभेदतस्तु त्र्यशीतिविधं मातृकापदादि, एतच्च सर्वं समूलोत्तरभेदं सूत्रार्थतो व्यवच्छिन्नं, एतेषां च परिकर्म्मणां षट् आदिमानि परिकर्म्माणि स्वसामयिकान्येव, गोशालकप्रवर्त्तिताजीविकपाखण्डिकसिद्धान्तमतेन पुनः च्युताच्युतश्रेणिकापरिकर्म्मसहितानि सप्त प्रज्ञाप्यन्ते, इदानीं परिकर्मसु नयचिन्ता, तत्र नैगमो द्विविधः–साङ्ग्राहिकोऽसाङ्ग्राहिकश्च, तत्र साङ्ग्राहिकः सङ्ग्रहं प्रविष्टोऽसाङ्ग्राहिकश्च व्यवहारं, तस्मात्सङ्ग्रहो व्यवहार ऋजुसूत्रः शब्दादयश्चैक एवेत्येवं चत्वारो नयाः, एतैश्चतुर्भिर्नयैः षट् स्वसामयिकानि परिकर्म्माणि चिन्त्यन्ते, अतो भणितं 'छ चउक्कनयाइं'ति भवन्ति, त एव चाजीविकास्त्रैराशिका भणिताः, कस्माद् ?, उच्यते, यस्मात्ते सर्वं त्र्यात्मकं इच्छन्ति, यथा जीवोऽजीवो जीवाजीवः लोकोऽलोको लोकालोकः सत् असत् सदसत् इत्येवमादि, नयचिन्तायामपि ते त्रिविधं नयमिच्छन्ति, तद्यथा–द्रव्यार्थिकः पर्यायार्थिकः उभयार्थिकः, अतो भणितं 'सत्त तेरासिय'त्ति सप्त परिकर्माणि त्रैराशिकपाखण्डिकास्त्रिविधया नयचिन्तया चिन्तयन्तीत्यर्थः, 'सेत्तं परिकम्मे'त्ति निगमनं, 'से किं तं सुत्ताइ'मित्यादि, तत्र सर्वद्रव्यपर्यायनयाद्यर्थसूचनात् सूत्राणि अष्टाशीत्यपि च सूत्रार्थतो व्यवच्छिन्नानि

भापितो गणधरैरपि पूर्वगतश्रुतमेव पूर्वं रचितं पश्चादाचारादि, नन्वेवं यदाचारनिर्युक्त्यामभिहितं 'सव्वेसिं आयारो पढमो' इत्यादि तत्कथम्?, उच्यते, तत्र स्थापनामाश्रित्य तथोक्तमिह त्वक्षररचनां प्रतीत्य भणितं पूर्वं पूर्वाणि कृतानीति, तच्च पूर्वगतं चतुर्दशविधं प्रज्ञप्तं, तद्यथा–'उप्पाये'त्यादि, तत्रोत्पादपूर्वं प्रथमं, तत्र च सर्वद्रव्याणां पर्यवाणां चोत्पादभावमङ्गीकृत्य प्रज्ञापना कृता, तस्य च पदपरिमाणमेका कोटी, अग्गेणीयं द्वितीयं, तत्रापि सर्वेषां द्रव्याणां पर्यवाणां जीवविशेषाणां चाग्रं–परिमाणं वर्ण्यत इत्यग्रेणीयं तस्य पदपरिमाणं षण्णवतिः पदशतसहस्राणि, 'वीरियं'ति वीर्यप्रवादं तृतीयं, तत्राप्यजीवानां जीवानां च सकर्मेतराणां वीर्यं प्रोच्यत इति वीर्यप्रवादं, तस्यापि सप्ततिः पदशतसहस्राणि परिमाणं, अस्तिनास्तिप्रवादं चतुर्थं, यद्यल्लोके यथास्ति यथा वा नास्ति, अथवा स्याद्वादाभिप्रायतः तदेवास्ति तदेव नास्तीत्येवं प्रवदतीति अस्तिनास्तिप्रवादं भणितं, तदपि पदपरिमाणतः षष्टिः पदशतसहस्राणि, ज्ञानप्रवादं पञ्चमं, तस्मिन् मतिज्ञानादिपञ्चकस्य भेदप्ररूपणा यस्मात् कृता तस्मात् ज्ञानप्रवादं, तस्मिन् पदपरिमाणमेका कोटी एकपदोनेति, सत्यप्रवादं षष्ठं सत्यं–संयमः सत्यवचनं वा तद्यत्र सभेदं सप्रतिपक्षं च वर्ण्यते तत्सत्यप्रवादं, तस्य पदपरिमाणं एका पदकोटी षट् च पदानीति, आत्मप्रवादं सप्तमं 'आय'त्ति आत्मा सोऽनेकधा यत्र नयदर्शनैर्वर्ण्यते तदात्मप्रवादं, तस्य पदपरिमाणं षड्विंशतिः पदकोट्यः कर्म्मप्रवादमष्टमं ज्ञानावरणादिकमष्टविधं कर्म्मप्रकृतिस्थित्यनुभागप्रदेशादिभिर्भेदैरन्यैश्चोत्तरोत्तरभेदैर्यत्र वर्ण्यते तत्कर्म्मप्रवादं, तत्परिमाणमेका पदकोटी अशीतिश्च सहस्राणीति, प्रत्या-

योगः, तथा चाह—'से किं तं मूलपढमाणुओगे' इत्यादि सूत्रसिद्धं यावत् 'सेत्तं मूलपढमाणुओगे', 'से किं त'मित्यादि इहैकवक्तव्यतार्थाधिकारानुगता वाक्यपद्धतयो गण्डिका उच्यन्ते तासामनुयोगः—अर्थकथनविधिः गण्डिकानुयोगः, तथा चाह—'गंडियाणुओगे अणेगे'त्यादि, तत्र कुलकरगण्डिकासु कुलकराणां विमलवाहनादीनां पूर्वजन्माद्यभिधीयत इति, एवं शेपास्वपि अभिधानवशतो भावनीयं, यावत् चित्रान्तरगण्डिकाः, नवरं दशार्हाः—समुद्रविजयादयो दश वसुदेवान्ताः तथा चित्रा—अनेकार्था अन्तरे—ऋषभाजिततीर्थकरान्तरे गण्डिका—एकवक्तव्यतार्थाधिकारानुगतास्ततश्च चित्राश्च ता अन्तरगण्डिकाश्च चित्रान्तरगण्डिकाः, एतदुक्तं भवति—ऋषभाजिततीर्थकरान्तरे तद्वंशजभूपतीनां शेपगतिगमनव्युदासेन शिवगमनानुत्तरोपपातप्राप्तिप्रतिपादिकाश्चित्रान्तरगण्डिका इति, ताश्च 'चोद्दसलक्खा सिद्धा निवईणेको य होइ सवट्ठे। एवेकेकट्ठाणे पुरिसजुगा हुंति संखेज्जे ॥१॥' त्यादिना ग्रन्थेन नन्दिटीकायामभिहितास्तत एवावधार्याः, इह सूत्रगमनिकामात्रस्य विवक्षितत्वादिति, शेपं सूत्रसिद्धमानिगमनात्, नवरं 'संखेज्जा वत्थु'त्ति पञ्चविंशत्युत्तरे द्वे शते 'संखेज्जा चूलवत्थु'त्ति चतुस्त्रिंशत् ॥ १२ ॥ साम्प्रतं द्वादशाङ्गे विराधनानिष्पन्नं त्रैकालिकं फलमुपदर्शयन्नाह—

इच्चेइयं दुवालसंगं गणिपिडगं अतीतकाले अणंता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टिंसु इच्चेइयं दुवालसंगं गणिपिडगं पडुप्पण्णे काले परित्ता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टंति इच्चेइयं दुवालसंगं गणिपिडगं

गोष्ठामाहिलवत् उभयाज्ञया पुनः पञ्चविधाचारपरिज्ञानकरणोद्यतगुर्वादेशादेरन्यथाकरणलक्षणया गुरुप्रत्यनीकद्रव्यलिङ्गधार्यनेकश्रमणवत् सूत्रार्थोभयैर्विराध्येत्यर्थः, अथवा द्रव्यक्षेत्रकालभावापेक्षमागमोक्तानुष्ठानमेवाज्ञा तया तदकरणेनेत्यर्थः, 'इच्चेय'मित्यादि गतार्थमेव; नवरं 'परित्ता जीवा' इति संख्येया जीवाः, वर्त्तमाने विशिष्टविराधकमनुष्यजीवानां संख्येयत्वात् 'अणुपरियट्टंति'त्ति अनुपरावर्त्तन्ते भ्रमन्तीत्यर्थः, 'इच्चेय'मित्यादि इदमपि भावितार्थमेव, नवरम् 'अणुपरियट्टिस्संति'त्ति अनुपरावर्त्तिष्यन्ते पर्यटिष्यन्तीत्यर्थः, 'इच्चेय'मित्यादि कण्ठ्यं, नवरं 'विइवइंसु'त्ति व्यतिव्रजितवन्तः चतुर्गतिकसंसारोल्लङ्घनेन मुक्तिमवाप्ता इत्यर्थः, एवं प्रत्युत्पन्नेऽपि, नवरं अयं विशेषः–'विइवयंति'त्ति व्यतिव्रजन्ति–व्यतिक्रामन्तीत्यर्थः, अनागतेऽप्येवं, नवरं 'वीइवइस्संति'त्ति व्यतिव्रजिष्यन्ति–व्यतिक्रमिष्यन्तीत्यर्थः, यदिदमनिष्टेतरभेदभिन्नं फलं प्रतिपादितमेतत्सदावस्थायित्वे सति द्वादशाङ्गस्योपजायत इत्याह—'दुवालसंगे' इत्यादि, द्वादशाङ्गं णमित्यलङ्कारे गणिपिटकं न कदाचिन्नासीदनादित्वात् न कदाचिन्न भवति सदैव भावात् न कदाचिन्न भविष्यति अपर्यवसितत्वात्, किं तर्हि ?, 'भुविं चे'त्यादि अभूच्च भवति च भविष्यति च, ततश्चेदं त्रिकालभावित्वादचलं अचलत्वाच्च ध्रुवं मेर्वादिवत् ध्रुवत्वादेव नियतं पञ्चास्तिकायेषु लोकवचनवत् नियतत्वादेव शाश्वतं समयावलिकादिषु कालवचनवत् शाश्वतत्वादेव वाचनादिप्रदानेऽप्यक्षयं गङ्गासिन्धुप्रवाहेऽपि पद्मह्रदवत् अक्षयत्वादेवाव्ययं मानुषोत्तराद्बहिः समुद्रवत् अव्ययत्वादेव स्वप्रमाणेऽवस्थितं जम्बूद्वीपादिवत् अवस्थितत्वादेव नित्यमाकाशवदिति, साम्प्रतं दृष्टा-

य, से किं तं अरूवी अजीवरासी ?, अरूविअजीवरासी दसविहा पन्नत्ता, तंजहा—धम्मत्थिकाए जाव अद्धासमए, रूवीअजीवरासी अणेगविहा० प० जाव से किं तं अणुत्तरोववाइआ ?, अत्तणुरोववाइआ पंचविहा पन्नत्ता, तंजहा—विजयवेजयंतजयंतअपराजितसव्वट्ठसिद्धिआ, सेत्तं अणुत्तरोववाइआ, सेत्तं पंचिंदियसंसारसमावण्णजीवरासी, दुविहा णेरइया पन्नत्ता, तंजहा—पज्जत्ता य अपज्जत्ता य, एवं दंडओ भाणियव्वो जाव वेमाणियत्ति, इमीसे णं रयणप्पभाए पुढवीए केवइयं खेत्तं ओगाहेत्ता केवइया णिरयावासा पण्णत्ता ?, गोयमा ! इमीसे णं रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सवाहल्लाए उवरि एगं जोयणसहस्सं ओगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठसत्तरि जोयणसयसहस्से एत्थ णं रयणप्पभाए पुढवीए णेरइयाणं तीसं णिरयावाससयसहस्सा भवंतीतिमक्खाया, ते णं णिरयावासा अंतो वट्टा वाहिं चउरंसा जाव असुभा णिरया असुभाओ णिरएसु वेयणाओ, एवं सत्तवि भाणियव्वाओ जं जासु जुज्जइ—'आसीयं वत्तीसं अट्ठावीसं तहेव वीसं च । अट्ठारस सोलसगं अट्ठुत्तरमेव वाहल्लं ॥ १ ॥ तीसा य पणवीसा पन्नरस दसेव सयसहस्साइं । तिण्णेगं पंचूणं पंचेव अणुत्तरा नरगा ॥ २ ॥ चउसट्ठी असुराणं चउरासीइं च होइ नागाणं । वावत्तरि सुवन्नाण वाउकुमाराण छण्णउइ ॥ ३ ॥ दीवदिसाउदहीणं विज्जकुमारिंदथणियमग्गीणं । छण्हंपि जुवलयाणं वावत्तरिमो य सयसहसा ॥ ४ ॥ वत्तीसट्ठावीसा वारस अड चउरो य सयसहस्सा । पण्णा चत्तालीसा छच्च सहस्सा सहस्सारे ॥ ५ ॥ आणयपाणयकप्पे चत्तारि सयाऽऽरणच्चुए तिन्नि । सत्त विमाणसयाइं चउसुवि एएसु कप्पेसु ॥६॥ एक्कारसुत्तरं हेट्ठिमेसु सत्तुत्तरं च मज्झिमए । सयमेगं उवरिमए पंचेव अणुत्तरविमाणा ॥ ७ ॥ दोचाए णं पुढवीए तचाए णं पुढवीए चउत्थीए पुढवीए पंचमीए पुढवीए छट्ठीए पुढवीए सत्तमीए पुढवीए गाहाहिं भाणियव्वा, सत्तमाए पुढवीए पुच्छा, गोयमा ! सत्तमाए

अपि, पञ्चेन्द्रियाश्चतुर्द्धा नारकादिभेदात्, तत्र नारकाः सप्तविधाः रत्नप्रभादिपृथ्वीभेदात्, पञ्चेन्द्रियतिर्यञ्चस्त्रिधा—जलस्थलखचरभेदात्, तत्र जलचराः पञ्चविधा मत्स्यकच्छपग्राहमकरसुंसुमारभेदात्, पुनर्मत्स्या अनेकधा—श्लक्ष्णमत्स्यादिभेदात्, कच्छपा द्विधा अस्थिकच्छपमांसकच्छपभेदात्, ग्राहाः पञ्चधा दिलिवेष्टकमद्गुपुलकसीमाकारभेदात् मकरा—मत्स्यविशेषा द्विविधाः—शुण्डामकरा करिमकराश्च, सुंसुमारास्त्वेकविधाः, स्थलचरा द्विधा—चतुष्पदपरिसर्प्पभेदात्, तत्र चतुष्पदाश्चतुर्द्धा—एकखुरद्विखुरगण्डीपदसनखपदभेदात्, क्रमेण चैते अश्वगोहस्तिसिंहादयः, परिसर्प्पा द्विधा—उरःपरिसर्पभुजपरिसर्पभेदात्, उरःपरिसर्पाश्चतुर्द्धा—अहिअजगराशालिकमहोरगभेदात्, तत्राहयो द्विधा—दर्वीकरा मुकुलिनश्चेति, खचराश्चतुर्द्धा—चर्मपक्षिणो लोमपक्षिणः समुद्गपक्षिणो विततपक्षिणश्च, तत्राद्यौ द्वौ वल्गुलीहंसादिभेदावितरौ द्वीपान्तरेष्वेव स्तः, सर्वे च पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च द्विधा—सम्मूर्च्छिमा गर्भव्युत्क्रान्तिकाश्च, तत्र संमूर्च्छिमाः नपुंसका एव, इतरे तु त्रिलिङ्गा इति, गर्भव्युत्क्रान्तिकमनुष्यास्त्रिधा—कर्मभूमिजा अकर्मभूमिजा अन्तरद्वीपजाश्चेति, कर्म्मभूमिजा द्विविधाः—आर्या म्लेच्छाश्च, आर्या द्वेधा—ऋद्धिप्राप्ता इतरे च, तत्र प्रथमा अर्हदादयः, द्वितीया नवविधाः—क्षेत्रजातिकुलकर्मशिल्पभाषाज्ञानदर्शनचारित्रभेदात्, देवाश्चतुर्विधाः भवनवास्यादिभेदाद्भवनपतयो दशधा असुरनागादयः व्यन्तरा अष्टविधा पिशाचादयः ज्योतिष्काः पञ्चधा चन्द्रादयः वैमानिका द्विधा—कल्पोपगाः कल्पातीताश्च, कल्पोपगा द्वादशधा सौधर्मादिभेदात्, कल्पातीता द्वेधा—ग्रैवेयका अनुत्तरोपपातिकाश्च

प्पहा मेयवसापूयरुहिरमंसचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काऊअगणिवण्णाभा कक्खडफासा दुरहियासा' इति तत्र नित्यं—सर्वदा अन्धकारं—अन्धत्वकारकं बहलवलाहकपटलाच्छादितगगनमण्डलामावास्याऽर्द्धरात्रान्धकारवत्तमः—तमिस्रं येषु ते नित्यान्धकारतमसः, अथवा नित्येनान्धकारेण सार्वकालिकेनेत्यर्थः तमसः—तमिस्रा नित्यान्धकारतमसः; जात्यन्धमेघान्धकारामावास्यानिशीथतुल्या इत्यर्थः, कथमित्यत आह—व्यपगता—अविद्यमाना ग्रहचन्द्रसूरनक्षत्ररूपाणां ज्योतिषां—ज्योतिष्कलक्षणविमानविशेषाणां ज्योतिषो वा—दीपाद्यग्नेः प्रभा—प्रकाशो येषु ते तथा, 'पह'त्ति पथशब्दो वाऽयं व्याख्येयः, तथा मेदोवसापूयरुधिरमांसानि शरीरावयवास्तेषां यच्चिक्खल्लं—कर्दमस्तेन लिप्तं—उपदिग्धमनुलेपनेन सकृल्लिप्तस्य पुनः पुनरुपलेपनेन तलं—भूमिका येषां ते मेदोवसापूयरुधिरमांसचिक्खिल्ललिप्तानुलेपनतलाः, यद्यपि च तत्र मेदःप्रभृतीन्यौदारिकपञ्चेन्द्रियशरीरावयवरूपाणि न सन्ति वैक्रियशरीरत्वान्नारकाणां तथापि तदाकारास्तदवयवास्तत्र प्रोच्यन्त इति, अशुचयो विश्राः—आमगन्धयः पूतिगन्धय इत्यर्थः, अत एव परमदुरभिगन्धाः 'काऊअगणिवण्णाभ'त्ति कृष्णाग्निर्लोहादीनां ध्मायमानानां तद्वर्णवदाभा येषां ते कृष्णाग्निवर्णाभाः, तथा कर्कशः स्पर्शो येषां ते कर्कशस्पर्शाः, अत एव दुःखेन—कृच्छ्रेणाधिसोढुं शक्यते वेदना येषु ते दुरधिसह्याः, अत एवाशुभा नरका अशुभा नरकेषु वेदना इति 'एवं सत्तवि भाणियव्व'त्ति प्रथमामसुञ्चता सप्त इत्युक्तं, 'जं जासु जुज्जइ'त्ति यच्च यस्यां पृथिव्यां बाहल्यस्य नरकाणां च परिमाणं युज्यते स्थानान्तरोक्तानुसारेण तच्च तस्यां

तरविउलगंभीरखायफलिहा अट्टालयचरियदारगोउरकवाडतोरणपडिदुवारेदसभागा जंतमुसलमुसंढिसयग्घिपरिवारिया अउज्झा अडयालकोट्ठरइया अडयालकयवणमाला लाउल्लोइयमहिया गोसीससरसरत्तचंदणदद्दरदिण्णपंचंगुलितला कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघेंतगंधुद्धुयाभिरामा सुगंधिया गंधवट्टिभूया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया णिम्मला वितिमिरा विसुद्धा सप्पभा समिरीया सउज्जोआ पासाईया दरिसणिज्ञा अभिरूवा पडिरूवा, एवं जं जस्स कमती तं तस्स जं जं गाहाहिं भणियं तह चेव वण्णओ। केवइया णं भंते! पुढविकाइयावासा प० ?, गोयमा! असंखेज्ञा पुढवीकाइयावासा प०, एवं जाव मणुस्सत्ति, केवइया णं भंते! वाणमंतरावासा प० ?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए रयणामयस्स कंडस्स जोयणसहस्सबाहल्लस्स उवरिं एगं जोयणसयं ओगाहेत्ता हेट्ठा चेगं जोयणसयं वज्जेत्ता मज्झे अट्ठसु जोयणसएसु एत्थ णं वाणमंतराणं देवाणं तिरियमसंखेज्ञा भोमेज्ञा नगरावाससयसहस्सा प०, ते णं भोमेज्ञा नगरा बाहिं वट्टा अंतो चउरंसा, एवं जहा भवणवासीणं तहेव णेयव्वा, णवरं पडागमालाउला सुरम्मा पासाईया दरिसणिज्ञा अभिरूवा पडिरूवा ॥ केवइया णं भंते! जोइसियाणं विमाणावासा प० ?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्ञाओ भूमिभागाओ सत्तनउयाइं जोयणसयाइं उड्ढं उप्पइत्ता एत्थ णं दसुत्तरजोयणसयबाहल्ले तिरियं जोइसविसए जोइसियाणं देवाणं असंखेज्ञा जोइसियविमाणावासा प०, ते णं जोइसियविमाणावासा अब्भुग्गयमूसियपहसिया विविहमणिरयणभत्तिचित्ता वाउद्धुयविजयवेजयंतीपडागछत्ताइछत्तकलिया तुंगा गगणतलमणुलिहंतसिहरा जालंतररयणपञ्जरुम्मिलियव्व मणिकणगथूभियागा वियसियसयपत्तपुण्डरीयतिलयरयणद्धचंदचित्ता अंतो बाहिं च सण्हा तवणिज्जवालुआपत्थडा सुहफासा सस्सिरीयरूवा पासाईया दरिसणिज्ञा ॥

रयोरन्तरमष्टहस्तो मार्गः पाठान्तरेण 'चतुरय'न्ति चतुरकाः सभाविशेषाः ग्रामप्रसिद्धाः 'दारगोउर'त्ति गोपुरद्वाराणि प्रतोल्यो—नगरस्यैव कपाटानि प्रतीतानि तोरणान्यपि तथैव प्रतिद्वाराणि—अवांतरद्वाराणि तत एतेषां द्वन्द्व एतानि देशलक्षणेषु भागेषु येषां तानि तथा, इह देशो भागश्चानेकार्थः, ततोऽन्योऽन्यमनयोर्विशेष्यविशेषणभावो दृश्य इति, तथा जंत्ताणि—पाषाणक्षेपणयन्त्राणि मुशलानि प्रतीतानि मुसुंढ्यः—प्रहरणविशेषाः शतघ्न्यः—शतानामुपघातकारिण्यो महाकायाः काष्ठशैलस्तम्भयष्टयः ताभिः 'परिवारिय'त्ति—परिवारितानि परिकलितानीत्यर्थः, तथा अयोध्यानि—योधयितुं—सङ्ग्रामयितुं दुर्गत्वान्न शक्यन्ते परबलैर्यानि तान्ययोध्यानि अविद्यमाना वा योधाः-परबलसुभटा यानि प्रति तान्ययोधानि, तथा 'अडयालकोट्टगरइय'त्ति अष्टचत्वारिंशद्भेदभिन्नविचित्रच्छन्दगोपुररचितानि, अन्ये भणन्ति—अडयालिय(ल)शब्दः किल प्रशंसावाचकः, तथा 'अडयालकयवणमाल'त्ति अष्टचत्वारिंशद्भेदभिन्नाः प्रशंसार्हाः कृता वनमाला—वनस्पतिपल्लवस्रजो येषु तानि तथा, 'लाइयं'ति यद्भूमेश्छगणादिनोपलेपनं 'उल्लोइयं'ति कुड्यमालानां सेटिकादिभिः सम्मृष्टीकरणं ततस्ताभ्यामिव महितानि—पूजितानि लाउल्लोइयमहितानि, तथा गोशीर्षं—चन्दनविशेषः सरसं च—रसोपेतं यद्रक्तचन्दनं—चन्दनविशेषः ताभ्यां दर्दराभ्यां—घनाभ्यां दत्ताः पञ्चाङ्गुलयस्तला—हस्तकाः कुड्यादिषु येषु, अथवा गोशीर्षसरसरक्तचन्दनस्य सत्का दर्दरेण—चपेटाभिघातेन दर्दरेषु वा—सोपानवीथीषु दत्ताः पञ्चाङ्गुलयस्तला येषु तानि गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलानि, तथा कालागुरुः—कृष्णागुरुर्गन्धद्रव्यविशेषः प्रवरः—प्रधानः कुन्दुरुक्कः—चीडा

नैकस्य कस्यचिदेवेत्यर्थः, 'एव'मित्यादि, यथाऽसुरकुमारावाससूत्रे तत्परिमाणमभिहितमेवमिति—तथा यद्भवनादिपरिमाणं यस्य नागकुमारादिनिकायस्य क्रमते—घटते तत्तस्य वाच्यमिति, किंविधं तस्य परिमाणमत आह—'जं जं गाहाहिं भणियं' यद्यद् गाथाभिः 'चउसट्ठि असुराण'मित्यादिकाभिरभिहितं, किं परिमाणमेव तथा वाच्यं नेत्याह—'इह चेव वण्णओ'त्ति यथा असुरकुमारभवनानां वर्णक उक्तस्तथा सर्वेषामसौ वाच्य इति, तथाहि—'केवइया णं भंते! नागकुमारावाससयसहस्सा पण्णत्ता?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठहत्तरे जोयणसहस्से एत्थ णं रयणप्पभाए चुलसीई नागकुमारावाससयसहस्सा भवन्तित्तिमक्खायंति, ते णं भवणा' इत्यादि, द्वीपकुमारादीनां तु षण्णां प्रत्येकं षट्सप्ततिर्वाच्येति। 'केवइया णं भंते! पुढवी'त्यादि गतार्थं, नवरं मनुष्याणां संख्यातानामेव गर्भव्युत्क्रान्तिकानां असंख्यातानामभावात् संख्याता एवावासाः, सम्मूर्च्छिमानां त्वसंख्येयत्वेन प्रतिशरीरमावासभावादसंख्येयानि इति भावनीयमिति। 'केवइया णं भंते! जोइसियाणं विमाणावासा' इत्यादि, 'अब्भुग्गयमुसियपहसिय'त्ति अभ्युद्गता—सञ्जाता उत्सृता—प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा—दीप्तिस्तया सिताः—शुक्ला इत्यभ्युद्गतोत्सृतप्रभासिताः, तथा विविधा—अनेकप्रकारा मणयः—चन्द्रकान्ताद्या रत्नानि—कर्केतनादीनि तेषां भक्तयो—विच्छित्तिविशेषास्ताभिश्चित्राः—चित्रवन्तः आश्चर्यवन्तो वेति विविधमणिरत्नभक्तिचित्राः, तथा वातोद्धूता—वातकम्पिता विजयः—अ-

दर्शनीयाः अभिरूपाः प्रतिरूपा इति पूर्ववत् । 'केवइए'त्यादि, रत्नप्रभायाः पृथिव्या 'वहुसमरमणिज्जाओ भूमिभागाओ'त्ति वहुसमरमणीयस्य भूमिभागस्य ऊर्द्धं—उपरि तथा चन्द्रमसः—सूर्यग्रहगणनक्षत्रतारारूपाणि णमित्यलङ्कारे किं?—'वीइवइत्त'त्ति व्यतिव्रज्य—व्यतिक्रम्येत्यर्थः, तारारूपाणि चेह तारका एवेति, तथा 'वहूनी'त्यादि, किमित्याह—ऊर्द्धम्—उपरि दूरमत्यर्थं व्यतिव्रज्य चतुरशीतिविमानलक्षाणि भवन्तीति सम्बन्धः, 'इतिमक्खाय'त्ति इति—एवंप्रकारा अथवा यतो भवन्ति तत आख्याताः सर्ववेदिनेति, 'ते णं'ति तानि विमानानि णमिति वाक्यालङ्कारे 'अच्चिमालिप्पभ'त्ति आर्चिर्मालिः—आदित्यस्तद्वत्प्रभान्ति—शोभन्ते यानि तान्यर्चिर्मालिप्रभाणि, तथा भासानां—प्रकाशानां राशिः—भासराशिः—आदित्यस्तस्य वर्णस्तद्वदाभा—छायावर्णो येषां केषांचित्तानि भासराशिवर्णाभानि, तथा 'अरय'त्ति अरजांसि स्वाभाविकरजोरहितत्वात् 'नीरय'त्ति नीरजांसि आगन्तुकरजोविरहात् 'निम्मल'त्ति निर्मलानि कक्खड(कर्कश)मलाभावात् 'वितिमिर'त्ति वितिमिराणि आहार्यान्धकाररहितत्वात् विशुद्धानि स्वाभाविकतमोविरहात् सकलदोषविरामाद्वा सर्वरत्नमयानि न दार्वादिदलमयानीत्यर्थः, अच्छान्याकाशस्फटिकवत् श्लक्ष्णानि सूक्ष्मस्कन्धमयत्वात् घृष्टानीव घृष्टानि खरशाणया पाषाणप्रतिमेव मृष्टानि सुकुमारशाणया पाषाणप्रतिमेवेति निष्पङ्का निकलङ्कविकलत्वात् कर्दमविशेषरहितत्वाद्वा निष्कङ्कटा—निष्कवचा निरावरणा निरुपघातेत्यर्थः छाया—दीप्तिर्येषां तानि निष्कण्टकच्छायानि सप्रभा-

'नेरइया णं भंते!' इत्यादि सुगमं, नवरं स्थितिः—नारकादिपर्यायेण जीवानामवस्थानकालः 'अपज्जत्तयाणं'ति नारकाः किल लब्धितः पर्याप्तका एव भवन्ति, करणतस्तूपपातकाले अन्तर्मुहूर्त्तं यावदपर्याप्तका एव भवन्ति ततः पर्याप्तकाः, ततस्तेषामपर्याप्तकत्वेन स्थितिर्जघन्यतोऽप्युत्कर्षतोऽपि चान्तर्मुहूर्त्तमेव, पर्याप्तकानां पुनरौघिक्येव जघन्योत्कृष्टा चान्तर्मुहूर्त्तोना भवतीति, अयं चेह पर्याप्तकापर्याप्तकविभागः—'नारयदेवा तिरिमणुयगब्भया जे असंखवासाऊ। एते उ अपज्जत्ता उववाए चेव बोद्धव्वा ॥ १ ॥ सेसा य तिरियमणुया लद्धिं पप्पोववायकाले य। दुहओवि य भइयव्वा पज्जत्तियरे य जिणवयणं ॥२॥' ति, उक्ता सामान्यतो नारकाणां स्थितिर्विशेषतस्तामभिधातुमिदमाह—'इमीसे णं'मित्यादि, स्थितिप्रकरणं च सर्वं प्रज्ञापनाप्रसिद्धमित्यतिदिशन्नाह—'एवं'मिति यथा प्रज्ञापनायां सामान्यपर्याप्तकापर्याप्तकलक्षणेन गमत्रयेण नारकाणा नारकविशेषाणां तिर्यगादिकानां च स्थितिरुक्ता एवमिहापि वाच्या, कियद्दूरं यावदित्याह—'जाव विजये'त्यादि, अनुत्तरसुराणामोघिकापर्याप्तकपर्याप्तकलक्षणं गमत्रयं यावदित्यर्थः, इह चैवमतिदिष्टसूत्राण्यर्थतो वाच्यानि रत्नप्रभानारकाणां भदन्त! कियती स्थितिः?, गौतम! जघन्येन दश वर्षसहस्राणि उत्कर्षतः सागरोपमं १, अपर्याप्तकरत्नप्रभापृथिवीनारकाणां भदन्त! कियन्तं कालं स्थितिः प्रज्ञप्ता ?, गौतम! उभयथापि अन्तर्मुहूर्त्तमेव, पर्याप्तकानां तु सामान्योक्तैवान्तर्मुहूर्त्तोना वाच्या, एवं शेषपृथ्वीनारकाणां प्रत्येकं दशानामसुरादीनां पृथिवीकायिकानां तिरश्चां गर्भजेतरभेदानां मनुष्याणां व्यन्तराणामष्टविधानां ज्योतिष्काणां पञ्चप्रकाराणां सौधर्म्मादीनां

असंखेज्जवासाउय०, जइ संखेज्जवासाउय० किं पज्जत्तय० अपज्जत्तय० ?, गोयमा! पज्जत्तय० नो अपज्जत्तय०, जइ पज्जत्तय० किं समद्दिट्ठी० मिच्छदिट्ठी० सम्मामिच्छदिट्ठी० ?, गोयमा! सम्मदिट्ठी० नो मिच्छदिट्ठी नो सम्मामिच्छदिट्ठी, जइ सम्मदिट्ठी० किं संजय० असंजय० संजयासंजय० ?, गोयमा! संजय० नो असंजय० नो संजयासंजय०, जइ संजय० किं पम्मत्तसंजय० अपम्मत्तसंजय० ?, गोयमा! पमत्तसंजय० नो अपमत्तसंजय०, जइ पमत्तसंजय० किं इड्ढिपत्त० अणिड्ढिपत्त० ?, गोयमा! इड्ढिपत्त० नो अणिड्ढिपत्त० वयणा विभाणियव्वा आहारयसरीरे समचउरंससंठाणसंठिए, आहारयसरीरस्स केमहालिया सरीरोगाहणा पन्नत्ता?, गोयमा! जहन्नेणं देसूणा रयणी उक्कोसेणं पडिपुण्णा रयणी। तेआसरीरे णं भंते! कतिविहे पन्नत्ते?, गोयमा! पंचविहे पन्नत्ते, एर्गिदियतेयसरीरे वितिचउपंच० एवं जाव गेवेज्जस्स णं भंते! देवस्स णं मारणंतियसमुग्घाएणं समोहयस्स समाणस्स केमहालिया सरीरोगाहणा पन्नत्ता?, गोयमा! सरीरप्पमाणमेत्ता विक्खंभबाहल्लेणं आयामेणं जहन्नेणं अहे जाव विज्जाहरसेढीओ उक्कोसेणं जाव अहोलोइयग्गामाओ, उड्ढं जाव सयाइं विमाणाइं, तिरियं जाव मणुस्सखेत्तं, एवं जाव अणुत्तरोववाइया, एवं कम्मयसरीरं भाणियव्वं ( सूत्रं १५२ )

'कइ णं भंते' इत्यादि कण्ठ्यं, नवरमेकेन्द्रियौदारिकशरीरमित्यादौ यावत्करणाद् द्वित्रिचतुष्पञ्चेन्द्रियौदारिकशरीराणि पृथिव्याद्येकेन्द्रियजलचरादिपञ्चेन्द्रियभेदेन प्रागुपदर्शितजीवराशिक्रमेण वाच्यानि, कियद्दूरमित्याह—'गब्भवक्कंतिये'त्यादि, 'ओरालियसरीरस्से'त्यादि, तत्रोदारं–प्रधानं तीर्थकरादिशरीराणि प्रतीत्य अथवोरालं–विस्तरालं विशालं समधिकयोजनसहस्रप्रमाणत्वात् वनस्पत्यादि प्रतीत्य अथवा उरालं–स्वल्पप्रदेशोपचितत्वात् बृहत्त्वाच्च भेण्ड-

विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियं विविधं विशिष्टं वा कुर्वन्ति तदिति वैकुर्विकमिति वा, तत्रै-केन्द्रियवैक्रियशरीरं वायुकायस्य पञ्चेन्द्रियवैक्रियशरीरं नारकादीनां 'एवं जावे'त्यादेरतिदेशादिदं द्रष्टव्यं, यदुत 'जइ एगिंदियवेउव्वियसरीरए किं वाउकाइयएगिंदियवेउव्वियसरीरए अवाउकाइयएगिंदियवेउव्वियसरीरए ?, गोयमा ! वाउकाइयएगिंदियसरीरए नो अवाउकाइय' इत्यादिनाऽभिलापेनायमर्थो दृश्यः, यदि वायोः किं सूक्ष्मस्य वादरस्य वा ?, वादरस्यैव, यदि वादरस्य किं पर्याप्तकस्यापर्याप्तकस्य वा ?, पर्याप्तकस्यैव, यदि पञ्चेन्द्रियस्य किं नारकस्य पञ्चेन्द्रियतिरश्चो मनुजस्य देवस्य वा ?, गौतम ! सर्वेषां, तत्र नारकस्य सप्तविधस्य पर्याप्तकस्येतरस्य च, यदि तिरश्चः किं सम्मूर्च्छिमस्य इतरस्य वा ?, इतरस्य, तस्यापि संख्यातवर्षायुष एव पर्याप्तस्य, तस्यापि च जलचरादिभेदेन त्रिविधस्यापि, तथा मनुष्यस्य गर्भजस्यैव, तस्यापि कर्मभूमिजस्यैव, तस्यापि संख्यातवर्षायुषः पर्याप्तकस्यैव, तथा देवस्य भवनवास्यादेः, तत्रासुरादेर्दशविधस्य पर्याप्तकस्येतरस्य च, एवं व्यन्तरस्याष्टविधस्य ज्योतिष्कस्य पञ्चविधस्य, तथा यदि वैमानिकस्य किं कल्पोपपन्नस्य कल्पातीतस्य ?, उभयस्यापि पर्याप्तस्यापर्याप्तस्य चेति, तथा वैक्रियं भदन्त ! किंसंस्थितं ?, उच्यते, नानासंस्थितं, तत्र वायोः पताकासंस्थितं, नारकाणां भवधारणीयमुत्तरवैक्रियं च हुण्डसंस्थितं, पञ्चेन्द्रियतिर्यग्मनुष्याणां नानासंस्थितं, देवानां भवधारणीयं समचतुरस्रसंस्थानसंस्थितमुत्तरवैक्रियं नानासंस्थितं, केवलं कल्पातीतानां भवधारणीयमेव, तथा वैक्रियशरीरावगाहना भदन्त ! किंमहती ?, गौतम ! जघन्यतोऽङ्गुलासंख्येयभागमुत्कर्षतः साति-

किं इड्ढिपत्तपमत्तसंजयसम्मदिट्ठिपज्जत्तसंखेज्जवासाउयकम्मभूमिगगब्भवक्कंतियमणुस्साहारगसरीरे अणिड्ढिपत्तपमत्तसंजयसम्मदिट्ठिपज्जत्तयसंखेज्जवासाउयकम्मभूमिगगब्भवक्कंतियमणुस्साहारगसरीरे ?, गोयमा !' द्वितीयस्य निषेधः प्रथमस्य चानुज्ञा वाच्या, एतदेवाह—'वयणा विभाणियव्व'त्ति सूचितवचनान्यप्युक्तन्यायेन सर्वाणि भणनीयानि, विभागेन पूर्णान्युच्चारणीयानीत्यर्थः, 'आहारय'त्ति 'आहारगसरीरस्स केमहालिया सरीरोगाहणा पण्णत्ता ?, गोयमा !' इत्येतत् सूचितं, 'जहण्णेणं देसूणा रयणी'ति कथम्?, उच्यते, तथाविधप्रयत्नविशेषतस्तथारम्भकद्रव्यविशेषतश्च प्रारम्भकालेऽप्युक्तप्रमाणभावात्, न हीहौदारिकादेरिवाङ्गुलासंख्येयभागमात्रता प्रारम्भकाले इति भावः । 'तेयासरीरे णं भंते'इत्यादि, एवं यावत्करणात् प्रज्ञापनासत्कैकविंशतितमपदोक्ता तैजसशरीरवक्तव्यता इह वाच्या, सा चेयमर्थतः—'एगिंदियतेयगसरीरे णं भंते ! कतिविहे पण्णत्ते?, गोयमा ! पंचविहे पण्णत्ते, तंजहा—पुढवीजाववणस्सइकाइयएगिंदियतेयगसरीरे,' एवं जीवराशिप्ररूपणाऽनुसारेण सूत्रं भावनीयं, यावत् 'सव्वट्ठसिद्धगअणुत्तरोववाइयकप्पातीतवेमाणियदेवपंचेन्दियतेयगसरीरे णं भंते! किंसंठिए?, नाणासंठाणसंठिए' यस्य पृथिव्यादिजीवस्य यदौदारिकादिशरीरसंस्थानं तदेव तैजसस्य कार्म्मणस्य च, तथा जीवस्य मारणान्तिकसमुद्घातगतस्य कियती तैजसी शरीरावगाहना ?, शरीरमात्रा विष्कम्भबाहल्याभ्यामायामतस्तु जघन्येनाङ्गुलस्यासंख्येयभाग उत्कर्षत ऊर्द्धमधश्च लोकान्ताल्लोकान्तं यावदेकेन्द्रियस्य, ततस्तत्रोत्पत्तिमङ्गीकृत्येति भावः, एवं सर्वेषामेवैकेन्द्रियाणां द्वीन्द्रियाणां तु आयामत उत्कर्षेण तिर्यग्लोकाल्लोकान्तं यावत्प्रायस्तिर्यग्-

तद्विमानान्येवेति, एवं कार्म्मणस्याप्यवगाहना दृश्या समानत्वादेव तयोरिति । उक्तार्थमेव सूत्रांशमाह–'गेवेज्जगस्स ण' मित्यादि। अनन्तरं शरीरिणामवगाहनाधर्म्म उक्तोऽधुना त्ववधिधर्मप्रतिपादनायाह–'भेय विसयसंठाणे अब्भिंतर बाहिरे य देसोही । ओहिस्स वुड्ढिहाणी पडिवाई चेव अपडिवाई ॥१॥' द्वारगाथा, तत्र भेदोऽवधेर्वक्तव्यो, यथा द्विविधोऽवधिर्भवति–भवप्रत्ययः क्षायोपशमिकश्च, तत्र भवप्रत्ययो देवनारकाणां क्षायोपशमिको मनुष्यतिरश्चामिति, तथा विषयो–गोचरोऽवधेर्वाच्यः, स च चतुर्द्धा–द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो जघन्येन तेजोभाषयोरग्रहणप्रायोग्यानि द्रव्याणि जानाति, उत्कर्षतस्तु सर्वमेकाणुकाद्यनन्ताणुकान्तं रूपिद्रव्यजातं जानाति, क्षेत्रं जघन्यतोऽङ्गुलासंख्येयभागं जानाति उत्कर्षतोऽसंख्येयान्यलोके लोकमात्राणि खण्डानि जानाति, कालं जघन्यत आवलिकाया असंख्येयभागमतीतमनागतं च जानाति, उत्कर्षतः संख्यातीता उत्सर्प्पिण्यवसर्प्पिणीर्जानाति, भावतो जघन्यतः प्रतिद्रव्यं चतुरो वर्णादीन् उत्कर्षतः प्रतिद्रव्यमसंख्येयान् सर्वद्रव्यापेक्षया त्वनन्तानिति, तथा संस्थानमवधेर्वाच्यं, यथा नारकाणां तप्राकारोऽवधिः पल्याकारो भवनपतीनां पटहाकारो व्यन्तराणां झल्लर्याकृतिर्ज्योतिष्काणां मृदङ्गाकारः कल्पोपपन्नानां पुष्पावलीरचितशिखरचङ्गेर्याकारो ग्रैवेयकाना कन्याचोलकसंस्थानोऽनुत्तरसुराणां लोकनाल्याकृतिरित्यर्थः, तिर्यङ्मनुष्याणां तु नानासंस्थान इति, तथा 'अब्भिंतर'त्ति के अवधिप्रकाशितक्षेत्रस्याभ्यन्तरे वर्त्तन्ते इति वाच्यं,

'कइविहे'इत्यादि, अत्रावसरे प्रज्ञापनायास्त्रयस्त्रिंशत्तमं पदमन्यूनमध्येयमिति, अनन्तरमुपयोगविशेषः क्षायोपशमिको जीवपर्यायः उक्तोऽधुना स एवौदयिको वेदनालक्षणोऽभिधीयते—'सीया'इत्यादि द्वारगाथा, तत्र 'सीया य'त्ति चशब्दोऽनुक्तसमुच्चये तेन त्रिविधा वेदना—शीता उष्णा शीतोष्णा चेति, तत्र शीतामुष्णां च वेदयन्ति नारकाः, शेषास्त्रिविधामपि, 'दव्वे'त्ति उपलक्षणत्वाच्चतुर्विधा वेदना द्रव्यादिभेदेन, तत्र पुद्गलद्रव्यसम्बन्धात् द्रव्यवेदना नारकाद्युपपातक्षेत्रसम्बन्धात् क्षेत्रवेदना नारकाद्यायुःकालसम्बन्धात् कालवेदना वेदनीयकर्म्मोदयाद्भाववेदना, तत्र नारकादयो वैमानिकान्ताश्चतुर्विधामपि वेदनां वेदयन्तीति, तथा 'सारीर'त्ति त्रिविधा वेदना शारीरी मानसी शारीरमानसी च, तत्र संज्ञिपञ्चेन्द्रियाः सर्वे त्रिविधामपि इतरे तु शारीरीमेवेति, तथा 'साय'त्ति त्रिविधा वेदना—साता असाता सातासाता चेति, तत्र सर्वे जीवाः त्रिविधामपि वेदयन्तीति, 'तह वेयणा भवे दुक्ख'त्ति त्रिविधा वेदना—सुखा दुःखा सुखदुःखा चेति, तत्र सर्वेऽपि त्रिविधामपि वेदयन्ति, नवरं सातासातयोः सुखदुःखयोश्चायं विशेषः—सातासाते क्रमेणोदयप्राप्तवेदनीयकर्म्मपुद्गलानुभवलक्षणे सुखदुःखे तु परेण उदीर्यमाणवेदनीयकर्म्मानुभवलक्षणे, तथा 'अब्भुवगमुवक्कमिय'त्ति द्विधा वेदना—आभ्युपगमिकी औपक्रमिकी चेति, तत्राद्यामभ्युपगमतो वेदयन्ति जीवा यथा साधवः शिरोलुञ्चनब्रह्मचर्यादिकां द्वितीया तु स्वयमुदीर्णस्योदीरणाकरणेन वोदयमुपनीतस्य वेदनीयस्यानुभवतः, तत्र पञ्चेन्द्रियतिर्यग्मनुष्या द्विविधामपि शेषास्त्वौपक्रमिकीमेव वेदयन्तीति, तथा 'णीयाए चेव अणियाए'त्ति द्विविधा वेदना,

तदुत्तरं शेषद्वाराणि च भणद्भिः प्रज्ञापनायाश्चतुस्त्रिंशत्तमं परिचारणापदाख्यं पदमिह भणितव्यमिति, इदं चात्राहारविचारप्रधानतया आहारपदमुक्तमिति, तत्पुनरेवमर्थतस्तत्र 'आहाराभोगणाइय'त्ति एतस्य विवरणं—नारकाणा किमाभोगनिर्वर्त्तित आहारोऽनाभोगनिर्वर्त्तितो वा ?, उभयथापीति निर्वचनं, एवं सर्वेषां नवरमेकेन्द्रियाणामनाभोगनिर्वर्त्तित एवेति, तथा 'पोग्गला नेव जाणंति'त्ति अस्यार्थः—नारका यान् पुद्गलान् आहारयन्ति तानवधिनापि न जानन्ति अविषयत्वात्तदवधेस्तेषां, न पश्यन्ति चक्षुषाऽपि लोमाहारत्वात् तेषां, एवमसुरादयस्त्रीन्द्रियान्ताः, केवलं एकेन्द्रिया अनाभोगाहारत्वाद्द्वित्रीन्द्रियाश्च मत्यज्ञानित्वान्न जानन्ति चक्षुरिन्द्रियाभावाच्च न पश्यन्तीति, चतुरिन्द्रियास्तु चक्षुःसद्भावेऽपि मत्यज्ञानित्वात् प्रक्षेपाहारं न जानन्ति, चक्षुषापि न पश्यन्ति, तथा त एव लोमाहारमाश्रित्य न जानन्ति न पश्यन्तीति व्यपदिश्यते, चक्षुषोऽविषयत्वात्तस्य, पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च केचिज्जानन्ति पश्यन्ति चावधिज्ञानादिषु युक्ताः लोमाहारप्रक्षेपाहाराच्च, तथाऽन्ये जानन्ति न पश्यन्ति लोमाहारं जानन्त्यवधिना न पश्यन्ति चक्षुषा, तथा अन्ये न जानन्ति पश्यन्ति, तत्र न जानन्ति प्रक्षेपाहारं मत्यज्ञानित्वात्पश्यन्ति चक्षुषा, तथा अन्ये न जानन्ति न पश्यन्ति लोमाहारं निरतिशयत्वादिति, व्यन्तरज्योतिष्का नारकवत्, वैमानिकास्तु ये सम्यग्दृष्टयस्ते जानन्ति विशिष्टावधित्वात् पश्यन्ति चक्षुषोऽपि विशिष्टत्वात्, मिथ्यादृष्टयस्तु न जानन्ति न पश्यन्ति, प्रत्यक्षपरोक्षज्ञानयोस्तेषामस्पष्टत्वादिति, तथा 'अज्झवसाणे य'त्ति द्वारं, नारकादीनां प्रशस्ताप्रशस्तान्यसंख्येयान्यध्यवसायस्थाना-

वनार्थं बह्वल्पाल्पतरक्रमेण व्यवस्थापितमायुर्जातिनामनिधत्तायुः, अथ किमर्थं जात्यादिनामकर्म्मणाऽऽयुर्विशेष्यते ?, आयुष्कस्य प्राधान्योपदर्शनार्थं, यस्मान्नारकाद्यायुरुदये सति जात्यादिनामकर्म्मणामुदयो भवति, नारकादिभवोपग्राहकं चायुरेव, यस्माद्व्याख्याप्रज्ञप्त्यामुक्तं—"नेरइए णं भंते! नेरइएसु उववज्जइ अनेरइए नेरइएसु उववज्जइ ?, गोयमा! नेरइए नेरइएसु उववज्जइ नो अनेरइए नेरइएसु उववज्जइ" एतदुक्तं भवति—नारकायुःप्रथमसमयसंवेदनकाल एव नारक इत्युच्यते, तत्सहचारिणां च पञ्चेन्द्रियजात्यादिनामकर्म्मणामप्युदय इति, तथा 'गतिनामनिधत्ताउए'त्ति गतिर्नारकगत्यादिः तल्लक्षणं नामकर्म्म तेन सह निधत्तं—निषिक्तमायुर्गतिनामनिधत्तायुः, तथा 'ठिइनामनिधत्ताउए'त्ति स्थितिर्यत् स्थातव्यं तेन भावेनायुर्दलिकस्य सैव नामः—परिणामो धर्म इत्यर्थः स्थितिनाम, गतिजात्यादिकर्म्मणां च प्रकृत्यादिभेदेन चतुर्विधानां यः स्थितिरूपो भेदस्तत् स्थितिनाम तेन सह निधत्तमायुः स्थितिनामनिधत्तायुरिति, तथा 'पएसनामनिधत्ताउए'त्ति प्रदेशानां—प्रमितपरिमाणानामायुःकर्मदलिकानां नाम—परिणामो यः तथाऽऽत्मप्रदेशेषु सम्बन्धनं स प्रदेशनाम जातिगत्यवगाहनाकर्म्मणां वा यत्प्रदेशरूपं नामकर्म्म तत्प्रदेशनाम तेन सह निधत्तमायुः प्रदेशनामनिधत्तायुरिति, तथा 'अणुभागनामनिधत्ताउए'त्ति अनुभागः—आयुष्कर्मद्रव्याणां तीव्रादिभेदो रसः स एव तस्य वा नामः—परिणामोऽनुभागनाम अथवा गत्यादीनां नामकर्मणामनुभागबन्धरूपो भेदोऽनुभागनाम तेन सह निधत्तमायुरनुभागनामनिधत्तायुरिति, तथा 'ओगाहणानामनिधत्ताउए'त्ति अवगाहते जीवो यस्यां साऽवगाहना—शरीरमौदा-

